१

श्रीगणेशाय नमः॥ ॐ आथर्वणीये उपनिषद स्तथा सारवांतरीकाश्च लिख्यंते ॐ ब्रह्मादे
वानां प्रथमः संबभूव विश्वस्य कर्त्ता भुवनस्य गोप्ता स ब्रह्मविद्यां सर्वविद्याप्रतिष्ठामथर्वा
य ज्येष्ठपुत्राय प्राह अथर्वणे यां प्रवदेत ब्रह्माथर्वा तां पुरोवाचांगिरे ब्रह्मविद्यां स भा
रद्वाजाय सत्यवहाय प्राह भारद्वाजोंगिरसे परावरां शौनको ह वै महाशालोंगिरसं विधि
वदुपसन्नः पप्रच्छ कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवतीति॥ तस्मै स होवाच
द्वे विद्ये वेदितव्ये इति ह स्म यद्ब्रह्मविदो वदंति परा चैवापरा च तत्रापरा ऋग्वेदो यजुर्वेदः सामवे
दोथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छंदो ज्योतिषमितीतिहासपुराणं न्यायो मीमां
साधर्मशास्त्राणीत्यथ परा यया तदक्षरमधिगम्यते॥ यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम
चक्षुःश्रोत्रं तदपाणिपादं नित्यं विभुं सर्वगतं सुसूक्ष्मं तदव्ययं यद्भूतयोनिं परिप

१

श्यंति धीरा यथोर्णनाभिः सृजते गृह्णते च यथा पृथिव्यामोषधयः संभवंति यथा स
तः पुरुषात्केशलोमानि तथाक्षरात्संभवतीह विश्वं तपसा चीयते ब्रह्म ततोऽन्नम
भिजायते अन्नात्प्राणो मनः सत्यं लोकाः कर्मसु चामृतं यः सर्वज्ञः सर्वविद्यस्य ज्ञानम
यं तपः तस्मादेतद्ब्रह्म नाम रूपमन्नं च जायते तदेतत्सत्यं प्रथममुंडके ॥२॥ मंत्रेषु
कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि तान्याचरत नियतं सत्य
कामा एष वः पंथाः सुकृतस्य लोके यदा लेलायते ह्यर्चिः समिद्धे हव्यवाहने तदा
ज्यभागावंतरेणाहुतीः प्रतिपादयेत् यस्याग्निहोत्रमदर्शमपौर्णमासमचा
तुर्मास्यमनाग्रयणमतिथिवर्जितं च अहुतमवैश्वदेवमविधिनाहुतमासप्त
हुतमासप्तमांस्तस्य लोकान् हिनस्ति कालीकराली च मनोजवा च सुलोहिता

२

चैवसुधूम्रवर्णा स्फुलिंगिनी विश्वरुचीचदेवीलेलायमानाइतिसप्तजिह्वाः एतेषु
यश्चरतेभ्राजमानेषुयथाकालंचाहुतयोह्याददायन् तन्नयंत्येताः सूर्य्यस्यरश्म
योयत्रदेवानांपतिरेकोधिवासः एह्येहीतितमाहुतयः सुवर्चसः सूर्य्यस्यरश्मि
भिर्य्यजमानंवहंति प्रियांवाचमभिवदंत्योर्च्चयंत्येषवः पुण्यः सुकृतोब्रह्मलोकः प्ल
वाह्येतेअदृढायज्ञरूपाअष्टादशोक्तमवरंयेषुकर्म एतच्छ्रेयोयेभिनंदंतिमूढा
जरामृत्युंतेपुनरेवापियांति अविद्यायामंतरेवर्त्तमानाः स्वयंधीराः पंडितंमन्य
मानाः जघन्यमानाः परियंतिमूढा अंधेनैवनीयमानायथांधाः अविद्यायांब
हुधावर्त्तमानावयंकृतार्थाइतिमन्यंतिबालाः यत्कर्म्मिणोनप्रवेदयंतिरागात्तेना
तुराः क्षीणलोकाश्च्यवंते इष्टापूर्त्तंमन्यमानावरिष्ठंनान्यच्छ्रेयोवेदयंतेप्रमू

पं ४

ढाः नाकस्य पृष्ठे ते सुकृतेनुभूत्वेमं लोकं हीनतरं वा विशंति तपः श्रद्धे ये ह्युपवसं
त्यरण्ये शांता विद्वांसो भैक्ष्यचर्य्यां चरंतः सूर्यद्वारेण ते विरजाः प्रयांति यत्रामृतः
पुरुषो ह्यव्ययात्मा परीक्ष्य लोकान्कर्मचितान् ब्राह्मणो निर्वेदमायान्नास्त्यकृ
तोकृतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिः श्रोत्रियं ब्रह्मनिष्ठं ॥
तस्मै स विद्वानुपसन्नाय सम्यक् प्रशांतचित्ताय शमान्विताय येनाक्षरं पुरुषं
वेद सत्यं प्रोवाच तां तत्त्वतो ब्रह्मविद्यां तदेतत्सत्यं ॥ द्वितीयमुंडकं ॥२॥ यथा
सुदीप्तात्पावकाद्विस्फुलिंगाः सहस्रशः प्रभवंते सरूपाः तथाक्षराद्विवि
धाः सोम्य भावाः प्रजायंते तत्र चैवापि यांति दिव्यो ह्यमूर्त्तः पुरुषः स बाह्या
भ्यंतरो ह्यजः अप्राणो ह्यमनाः शुभ्र अक्षरात्परतः परः एतस्माज्जा

यतेप्राणोमनः सर्वेंद्रियाणिच खंवायुर्ज्योतिरापश्चपृथिवीविश्वधारिणी अग्निर्मूर्द्धा
२ चक्षुषीचंद्रसूर्यौदिशः श्रोत्रेवाग्विवृताश्चवेदाः वायुःप्राणोहृदयंविश्वमस्य पद्भ्यां
3 पृथिवीह्येषसर्वभूतांतरात्मातस्मादग्निः समिधोयस्यसूर्यः सोमःपर्जन्योषधयः पृ
थिव्यां पुमान्रेतः सिंचतियोषितायांबह्वीः प्रजाः पुरुषात्संप्रसूताः तस्मादृचः साम
यजूंषिदीक्षायज्ञाश्चसर्वेक्रतवोदक्षिणाश्च संवत्सरश्चयजमानश्चलोकाः सोमोयत्र
पवतेयत्रसूर्यः तस्माच्चदेवाबहुधासंप्रसूताः साध्यामनुष्याः पशवोवयांसि प्राणा
पानौव्रीहियवौतपश्चश्रद्धासत्यंब्रह्मचर्यंविधिश्च सप्तप्राणाः प्रभवंतितस्मात्स
प्तार्चिषः समिधः सप्तहोमाः सप्तइमेलोकायेषुचरंतिप्राणागुहाशयानिहिताः
सप्तसप्त अतः समुद्रागिरयश्चसर्वेऽस्मात्स्यंदंतेसिंधवः सर्वरूपाः ॥ अत २

श्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठते ह्यंतरात्मा पुरुष एवेदं विश्वं कर्म तपो ब्र
ह्म परामृतम् एतद्यो वेद निहितं गुहायां सो विद्याग्रंथिं विकिरतीह सोम्य इति द्वितीयमुंडके
२ आविः सन्निहितं गुहाचरन्नाम महत्पदम् अत्रैतत्सर्वमर्पितमेतत्प्राणंनिमिषं चय
त् एतज्जानीथ सदसद्वरेण्यं परं विज्ञानाद्यद्वरिष्ठं प्रजानां यदर्चिमद्यदणुभ्योऽणु
च यस्मिंल्लोका निहिता लोकिनश्च तदेतदक्षरं परं ब्रह्म स प्राणस्तदु वाङ्मनः त
देतत्सत्यं तदमृतं तद्वेद्धव्यं सोम्य विद्धि धनुर्गृहीत्वोपनिषदं महास्त्रं शरं ह्युपासा
निशितं संदधीत आयम्य तद्भावगतेन चेतसा लक्ष्यं तदेवाक्षरं सोम्य विद्धि प्रण
वो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भ
वेत् लक्ष्यं सर्वगतं चैव शरो मे सर्वतोमुखः वेद्धा सर्वगतश्चैव विद्धं लक्ष्यं न

४

५

संशयः ऋग्धनुर्यजुर्वाणेनसामज्याघोषणादिना ब्रह्मवेदमयं भुवं परिविद्धं ति नि
त्यशः यस्मिन्द्यौः पृथिवी चांतरिक्षमोतंमनः सर्वप्राणैश्चसर्वैः तमेवैकं जानाथ
आत्मानमन्यवाचो विमुंचथामृतस्यैषसेतुः अराइवरथनाभौसंहतायत्रनाड्यः
सएषोंतश्चरतेबहुधाजायमानओमित्येवंध्यायथआत्मानंस्वस्तिवःपरायतमसः
परस्तात् यःसर्वज्ञःसर्वविद्यस्यैषमहिमाभुविसंबभूव दिव्येब्रह्मपुरेह्येषसंव्योम्न्या
त्माप्रतिष्ठितः मनोमयःप्राणशरीरः नेताप्रतिष्ठितोंतर्हृदयंसन्निधाय तद्विज्ञा
नेनपरिपश्यंतिधीराआनंदरूपममृतंयद्विभाति भिद्यतेहृदयग्रंथिश्छिद्यंतेस
र्वसंशयाः क्षीयंतेचास्यकर्माणि तस्मिन्दृष्टेपरावरे हिरण्मयेपरेकोशेविरजं
ब्रह्मनिष्कलं तच्छुभ्रंज्योतिषांज्योतिस्तद्यदात्मविदोविदुः नतत्रचंद्रार्कवपुः

४

प्रकाशते न वांति वातान्न चयांति देवताः यत्र देवक्रतुभिर्भूतिभावनः स्वयं विभूत्या वि
रजः प्रकाशते न तत्र सूर्यो भाति न चंद्रतारकं नेमा विद्युतो भांति कुतोयमग्निः तमेव
भांतमनुभाति सर्वं तस्य भासा सर्वमिदं विभाति ब्रह्मैवेदममृतं पुरस्तात् ब्रह्म
ब्रह्म दक्षिणतश्चोत्तरेण अधश्चोर्ध्वं च प्रसृतं ब्रह्मैवेदं विश्वमिदं वरिष्ठं चतु
र्थमुंडकं ४ द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते तयोरन्यः पि
प्पलं स्वाद्वत्त्यनश्नन्नन्यो अभिचाकशीति समाने वृक्षे पुरुषो निमग्नो अनीशया
शोचति मुह्यमानः जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानमिति वीतशोकः
यदा पश्यः पश्यते रुक्मवर्णं कर्तारमीशं पुरुषं ब्रह्मयोनिं तदा विद्वान् पुण्यपा
पे विधूय निरंजनः परमं साम्यमुपैति प्राणो ह्येष सर्वभूतैर्विभाति विजानन्

५
5

विद्वान्नवते नातिवादी आत्मक्रीड आत्मरतिः क्रियावानेष ब्रह्मविदां वरिष्ठः सत्येन ल
भ्यस्तपसा ह्येष आत्मा सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यं अंतः शरीरे ज्योतिर्मयो हि
शुभ्रो यंपश्यंति यतयः क्षीणदोषाः सत्यमेव जयति नानृतं सत्येन पंथा विततो देवया
नः येनाक्रमंत्यृषयो ह्याप्तकामा यत्र तत्सत्यस्य परमं निधानं बृहच्च तद्दिव्यमचिंत्य
रूपं सूक्ष्माच्च तत्सूक्ष्मतरं विभाति दूरात्सुदूरे तदिहांतिके च पश्यं त्विहैव निहितं
गुहायां नचक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा ज्ञानप्रसादेन
विशुद्धसत्वस्ततस्तु तं पश्यति निष्कलं ध्यायमाना एषोणुरात्मा चेतसा वेदित
व्यो यस्मिन्प्राणः पंचधा संविवेश प्राणैश्चित्तं सर्वमोतं प्रजानां यस्मिन्विशुद्धे वि
भवत्येष आत्मा यं यं लोकं मनसा संविभाति विशुद्धसत्वः कामयते यांश्च कां

५

मान् तंतंलोकंजयतेतांश्चकामांस्तस्मादात्मज्ञंह्यर्चयेद्भूतिकामः पंचमंमुंडकं ५ सवे
देतत्परमंब्रह्मधामयत्रविश्वंनिहितभातिशुभ्रं उपासतेपुरुषायेह्यकामास्तेशुक्रमेतदति
वर्त्तंतिधीराः कामान्यःकामयतेमन्यमानःसकर्मभिर्जायतेतत्रतत्र पर्याप्तकाम
स्यकृतात्मनस्त्विहैवसर्वेप्रविलीयंतिकामाः नायमात्माप्रवचनेनलभ्योनचमेध
याबहुधाश्रुतेन यमेवैषवृणुतेतेनलभ्यस्तस्यैषआत्माविवृणुतेतनूंस्वां नायमात्मा
बलहीनेनलभ्योनचप्रमादात्तपसोवाप्यलिंगात् एतैरुपायैर्यततेयस्तुविद्वांस्तस्यैष
आत्माविशतेब्रह्मधाम संप्राप्यैनमृषयोज्ञानतृप्ताःकृतात्मानोवीतरागाःप्रशांताः
तेसर्वगंसर्वतःप्राप्यधीरायुक्तात्मानःसर्वमेवाविशंति वेदांतविज्ञानसुनिश्चिता
र्थाः सन्यासयोगाद्यतयःशुद्धसत्वाः तेब्रह्मलोकेषुपरांतकालेपरामृताःपरि

६

6

मुच्यंतिसर्वे गताः कलाः पंचदशाप्रतिष्ठादेवाश्चसर्वेप्रतिदेवतासु कर्माणिविज्ञानमयश्चआ
त्मापरेव्ययेसर्वएकीभवंति यथानद्यः स्पंदमानाः समुद्रेस्तंगछंतिनामरूपेविहाय
तथाविद्वान्नामरूपाद्विमुक्तः परात्परंपुरुषमुपैतिदिव्यं सयोहवैतत्परमंब्रह्मवेदब्रह्मै
वभवतिनास्याब्रह्मवित्कुलेभवतितरतिशोकंतरतिपाप्मानंगुहाग्रंथिभ्योविमुक्तोमृ
तोभवति तदेतदृचाभ्युक्तं क्रियावंतः श्रोत्रियाब्रह्मनिष्ठाः स्वयंजुह्वतएकर्षिंश्रद्धयं
तः तेषामेवैतांब्रह्मविद्यांवदेतशिरोव्रतंविधिवद्येस्तुचीर्णं तदेतत्सत्यमृषिरंगिराः
पुरोवाचनैतदचीर्णव्रतोधीतेनमः परमऋषिभ्योनमः परमऋषिभ्यः षष्ठंमुंडकं॥६॥
इत्यथर्ववेदेमुंडकोपनिषत्प्रथमः॥१॥ॐ सुकेशाचभारद्वाजः शैब्यश्चसत्यकामः
सौर्यायणीचगार्ग्यः कौशल्यश्चाश्वलायनोभार्गवोवैदर्भिः कवंधीकात्यायनस्तेहैते

६

ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाण एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भ
गवंतं पिप्पलादमुपसन्नास्तान्ह स ऋषिरुवाच भूय एव तपसा ब्रह्मचर्येण श्रद्धया
संवत्सरं संवत्स्यथ यथाकामं प्रश्नान्पृच्छथ यदि विज्ञास्यामः सर्वं ह वो वक्ष्याम इत्यथ क
बंधी कात्यायन उपेत्य पप्रच्छ भगवन्कुतो ह वा इमाः प्रजाः प्रजायंत इति तस्मै स होवाच प्रजा
कामो वै प्रजापतिः स तपोतप्यत स मिथुनमुत्पादयते रयिं च प्राणं चेत्येतौ मे बहुधा प्र
जाः करिष्यत इत्यादित्यो ह वै प्राणो रयिरेव चंद्रमा रयिर्वा एतत् सर्वं यन्मूर्तं चामूर्तं
च तस्मान्मूर्तिरेव रयिरथादित्य उदयन्यत्प्राचीं दिशं प्रविशति तेन प्राच्यान् प्राणान्र
श्मिषु सन्निधत्ते यद्दक्षिणां यत्प्रतीचीं यदधोर्ध्वं यदंतरा दिशो यत्सर्वं प्रकाशय
ति तेन सर्वान्प्राणान्रश्मिषु सन्निधत्ते स एष वैश्वानरो विश्वरूपः प्राणोऽग्नि

रुदयते तदेतदृचाभ्युक्तं विश्वरूपंहरिणंजातवेदसं परायणंज्योतिरेकंतपंतं सहस्र
रश्मिः शतधावर्त्तमानः प्राणः प्रजानामुदयत्येषसूर्यः संवत्सरोवैप्रजापतिस्तस्या
यनेदक्षिणंचोत्तरंच तद्येहवैतदिष्टापूर्त्तेकृतमित्युपासते तेचांद्रमसमेवलोकमभि
जयंतेतएवपुनरावर्त्ततेतस्मादेतऋषयः प्रजाकामादक्षिणंप्रतिपद्यंतएषहवैरयि
र्यः पितृयाणोथोत्तरेणतपसाब्रह्मचर्येणश्रद्धयाविद्ययात्मानमन्विष्यादित्यम
भिजायंतएतद्वैप्राणानामायतनमेतदमृतमभयमेतत्परायणमेतस्मान्नपु
नरावर्त्ततइत्येषनिरोधस्तदेषश्लोकः पंचपादंपितरंद्वादशाकृतिंदिवआहुःपरे
अर्द्धेपुरीषिणं अथेमेअन्यउपरेविचक्षणंसप्तचक्रेषडरआहुरर्पितमिति
मासोवैप्रजापतिस्तस्यकृष्णपक्षएवरयिःशुक्लःप्राणस्तस्मादेतऋषयःशु

ल्लइष्टं कुर्वतीतरस्मिन्नहोरात्रो वै प्रजापतिस्तस्याहरेव प्राणो रात्रिरेव रयिः प्राणं वा एते स्कं
दंति ये दिवा रत्यासंयुज्यंते ब्रह्मचर्यमेव तद्यद्रात्रौ रत्यासंयुज्यंते अन्नं वै प्रजापतिस्ततो
ह वै तेइतः स्वस्मादिमाः प्रजायंत इति तद्ये ह वै तत्प्रजापतिं व्रतं चरंति ते मिथुनमुत्पा
दयंते तेषामेवैष ब्रह्मलोको येषां तपो ब्रह्मचर्यं येषु सत्यं प्रतिष्ठितं तेषामसौ विरजा
ब्रह्मलोको न येषु जिह्ममनृतं न माया चेति १ अथ हैनं भार्गवो वैदर्भिः पप्रच्छ भग
वन्कत्येव देवाः प्रजां विधारयंते कतर एतत्प्रकाशयंते कः पुनरेषां वरिष्ठ इति त
स्मै स होवाचाकाशो ह वा एष देवो वायुरग्निरापः पृथिवी वाङ्मनश्चक्षुः श्रोत्रं च चेतेः प्र
काश्याभिवदंति वयमेतद्बाणमवष्टभ्य विधारयामस्तान्वरिष्ठः प्राण उवाच ॥ मा मो
हमापद्यथाहमेवैतत्पंचधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामीति ते

श्रद्दधाना बभूवुः सोभिमानादूर्ध्वमुत्क्रमत इव तस्मिन्नुत्क्रामत्यथेतरे सर्व एवोत्क्रम
न्ते तस्मिंश्च प्रतिष्ठमाने सर्व एव प्रतिष्ठंते तद्यथा मक्षिका मधुकरराजानमुत्क्रामंतं
सर्वा एवोत्क्रमंते तस्मिंश्च प्रतिष्ठमाने सर्वा एव प्रतिष्ठंते एवं वाङ्मनश्चक्षुः श्रोत्रं च
ते प्रीताः प्राणं स्तुन्वंत्येषोग्निस्तपत्येष सूर्य एष पर्जन्यो मघवानेष वायुः एष पृथि
वी रयिर्देवः सदसच्चामृतं च यत् अरा इव रथनाभौ प्राणे सर्वं प्रतिष्ठितं ऋचो य
जूंषि सामायज्ञः क्षत्रं च ब्रह्म च प्रजापतिश्चरसि गर्भे त्वमेव प्रतिजायसे तुभ्यं प्रा
(ति३) णः प्रजास्त्विमा यः प्राणैः प्रतिष्ठसि देवानामसि वह्नितमः पितॄणां प्रथमा स्वधा ऋ
षीणां चरितं सत्यमथर्वांगिरसामसि इंद्रस्त्वं प्राण तेजसा रुद्रोसि परिरक्षि
तात्वमंतरिक्षे चरसि सूर्यस्त्वं ज्योतिषां पतिः यदा त्वमभिवर्षस्यथे

माः प्राणते प्रजाः आनंदरूपस्तिष्ठंति कामायान्नं भविष्यतीति व्रात्यस्त्वं प्रा
णैकऋषिरत्ता विश्वस्य सत्पतिः वयमाद्यस्य दातारः पिता त्वं मातरिश्वनः याते
तनूर्या वाचि प्रतिष्ठिता या श्रोत्रे या च चक्षुषि या च मनसि संतता शिवां तां कु
रु मोत्क्रमीः प्राणस्येदं वशे सर्वं त्रिदिवे यत्प्रतिष्ठितं मातेव पुत्रान्रक्षस्व श्रीश्च प्रज्ञां
च विधेहि न इति ते मंत्रा ऋचोभिवदंति प्राणायूनम इति २ अथ हैनं कौशल्य
आश्वलायनः पप्रच्छ भगवन्कुत एष प्राणो जायते कथमायात्यस्मिन्शरीर आ
त्मानं वा प्रविभज्य कथं प्रतिष्ठते केनोत्क्रमते कथं बाह्यमभिधत्ते कथमध्या
त्ममिति तस्मै स होवाचातिप्रश्नान्पृच्छसि ब्रह्मिष्ठोसीति तस्मात्तेहं ब्र
वीम्यात्मन एष प्राणो जायते यथैषा पुरुषे छायैतस्मिन्नेतदाततं मनो

८ मा
१

कृतेनेमायात्यस्मिञ्छरीरे यथासम्राडेवाधिकृतान्विनियुंक्त एतान्ग्रामाने
तान्ग्रामानधितिष्ठस्वेत्येवमेवैष प्राण इतरान्प्राणान्पृथक्पृथगेव सन्निधत्ते
पायूपस्थेपानं चक्षुःश्रोत्रे मुखनासिकाभ्यां प्राणः स्वयं प्रतिष्ठते मध्ये तु
समान एष ह्येतद्धुतमन्नं समं नयति तस्मादेताः सप्तार्चिषो भवंति हृदि
ह्येष आत्मा अत्रैतदेकशतं नाडीनां तासां शतमेवैकस्यां द्वासप्रतिशाखा
नाडीसहस्राण्यासु व्यानश्चरत्यथैकयोर्ध्व उदानः पुण्येन पुण्यं लोकं नय
ति पापेन पापमुभाभ्यामेव मनुष्यलोकमादित्यो ह वै बाह्यः प्राण उदयत्ये
ष ह्येनं चाक्षुषं प्राणमनुगृह्णाति पृथिव्यां या देवता सैषा पुरुषस्यापा
नमवष्टभ्यांतरा यदाकाशः स समानो वायुर्व्यानस्तेजो ह वा उदानस्तस्मा

८

दुपशांततेजाः पुनर्भवमिंद्रियैर्मनसिसंपाद्यमानैर्यच्चित्तस्तेनैषप्राणमाया
तिप्राणस्तेजसायुक्तः सहात्मनायथासंकल्पितंलोकंनयतियएवंविद्वान्
प्राणंवेदनेहास्यप्रजाहीयतेमृतोभवति तदेषश्लोकः उत्पत्तिंस्थानमाया
तिविभुत्वंचैवपंचधा अध्यात्मंचैवप्राणंच विज्ञायामृतमश्नुते विज्ञायामृ
तमश्नुतइति ३ अथहैनंसौर्यायणीगार्ग्यः पप्रच्छभगवन्नेतस्मिन्पुरुषे
कानिस्वपंतिकानिजाग्रतिकतरएषदेवः स्वप्नान्पश्यतिकस्यैतत्सुखं
भवतिकस्मिन्नुसर्वेप्रतिष्ठिताभवंतीतितस्मैसहोवाचयथागार्ग्यमरीचयो
अर्कस्यास्तंगच्छतःसर्वाएतस्मिंस्तेजोमंडलएकीभवंतिताःपुनःपुनरुदय
तःप्रचरंत्येवंहवैतत्सर्वंपरेदेवेमनस्येकीभवंतितेनतर्ह्येषपुरुषोनशृ

१०
10

शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानंदयते न वि
सृजति नोपेयति न स्वपितीत्याचक्षते प्राणाग्नय एवैतस्मिन्पुरे जाग्र
ति गार्हपत्यो ह वा एषोपानव्यानोन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते
प्रणयेनादाहवनीयः प्राणो य उच्छ्वासनिःश्वासावेतावाहुती समं नयति स
मानो मनो ह वाव यजमान इष्टफलमेवोदानः स एनं यजमानमहरहर्ब्र
ह्म गमयति अत्रैष देवः स्वप्ने महिमानमनुभवति यद्दृष्टं दृष्टमनुपश्य
ति श्रुतं श्रुतमेवार्थमनुशृणोति देशदिगंतरैश्च प्रत्यनुभूतं पुनः पुनः प्रत्य
नुभवति दृष्टं चादृष्टं श्रुतं चाश्रुतं चानुभूतं चाननुभूतं च सच्चासच्च
सर्वं पश्यति सर्वः पश्यति स यदा तेजसाभिभूतो भवत्यत्रैष देवः स्व

१०

प्रान्पश्यत्यथतदैतस्मिन्शरीरएतत्सुखंभवतिसयथासोम्यवयांसिवासो
वृक्षंसंप्रतिष्ठतएवहवैतत्सर्वंपरेआत्मनिसंप्रतिष्ठतेपृथिवीचपृथिवी
मात्राश्चापश्चापोमात्राचतेजश्चतेजोमात्राचवायुश्चवायुमात्राचाकाशंचा
काशमात्राचचक्षुर्द्रष्टव्यंचश्रोत्रंचश्रोतव्यंघ्राणंचघ्रातव्यंचरसश्चरसयित
व्यंचत्वक्चस्पर्शयितव्यंचवाक्चवक्तव्यंहस्तौचदातव्यंचपादौचगंतव्यंचपा
युश्चविसर्जयितव्यंचोपस्थश्चानंदयितव्यंचमनश्चमंतव्यंचबुद्धिश्चबो
द्धव्यंचाहंकारश्चाहंकर्तव्यंचचित्तंचचेतयितव्यंचतेजश्चविद्योतयितव्यं
चप्राणश्चविधारयितव्यंचेषहिद्रष्टास्प्रष्टाश्रोताघ्रातारसयितामंता
बोद्धाकर्ताविज्ञानात्मापुरुषः सयोहवैतदच्छायमशरीरमलोहितं

११

शुभ्रमक्षरं वेदयते यस्तु सोम्य स सर्वज्ञः सर्वो भवति तदेष श्लोकः विज्ञाना
त्मा सह देवैश्च सर्वैः प्राणा भूतानि संप्रतिष्ठंति यत्र तदक्षरं वेदयते यस्तु सोम्य
स सर्वज्ञः सर्वमेवाविवेशेति ४ अथ हैनं शैब्यः सत्यकामः पप्रच्छ स यो ह वै
तद्भगवन्मनुष्येषु प्रायणांतमोंकारमभिध्यायीत कतमं वाव स तेन लो
कं जयतीति तस्मै स होवाच एतद्वै सत्यकाम परं चापरं च ब्रह्म यदोंकार
स्तस्माद्विद्वानेतेनैवायतनेनैकतरमन्वेति स यद्येकमात्रमभिध्यायी
स तेनैव संवेदितस्तूर्णमेव जगत्यामभिसंपद्यते तमृचो मनुष्यलोकमु
पनयंते स तत्र तपसा ब्रह्मचर्येण श्रद्धया संपन्नो महिमानमनुभवत्य
थ यदि द्विमात्रेण मनसि संपद्यते सोंतरिक्षं यजुर्भिरुन्नीयते सो

मल्लोकं स सोमलोके विभूतिमनुभूय पुनरावर्त्तते यः अथ यदि त्रिमात्रेण मनसि सं
पद्यते यः पुनरेतं त्रिमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्यायीत स तेज
सि सूर्ये संपन्नः स सामभिरुन्नीयते सूर्यलोकं स सूर्यलोके विभूतिमनुभूय पुन
रावर्त्तते यः पुनरेव तमर्द्धचतुर्थमात्रेणोमित्येतेनैवाक्षरेण परं पुरुषमभिध्या
यीत स तेजसि परे संपन्नो यथा पादोदरस्त्वचा विनिर्मुच्यत एवं हैव स पाप्मना
विनिर्मुक्तः सो अथर्वभिरुन्नीयते ब्रह्मलोकं स एतस्माज्जीवघनात्परात्परं पु
रिशयं पुरुषमीक्षते तदेतौ श्लोकौ भवतः तिस्रो मात्रा मृत्युमत्यः प्रयुक्ता अ
न्योन्यसक्ता अनविप्रयुक्ताः क्रियासु बाह्याभ्यंतरमध्यमासु सम्यक् प्रयु
क्तासु न कंपते ज्ञः ऋग्भिरेतं यजुर्भिरंतरिक्षं सामभिर्यत्तत्कवयो वेदयंते

तमोंकारेणैवायतनेनान्वेति विद्वान्यत्तच्छांतमजरममृतमभयं परंपरायणं चे
ति ५ अथ हैनं सुकेशा भारद्वाजः पप्रच्छ भगवन्हिरण्यनाभः कौशल्यो राजपुत्रो
मामुपेत्यैतं प्रश्नमपृच्छत षोडशकलं भारद्वाज पुरुषं वेत्थ तमहं कुमारमब्रुवं ना
हमिमं वेद यद्यहमिममवेदिषं कथं ते नावक्ष्यमिति समूलो वा एष परिशुष्यति
योऽनृतमभिवदति तस्मान्नार्हाम्यहमनृतं वक्तुं स तूष्णीं रथमारुह्य प्रव
व्राज तं त्वा पृच्छामि क्वासौ पुरुष इति तस्मै स होवाच इहैवांतःशरीरे सोम्य स पु
रुषो यस्मिन्नेताः षोडशकलाः प्रभवंतीति स ईक्षांचक्रे कस्मिन्नहमुत्क्रांतो भ
विष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजत प्राणाच्छ्रद्धां
खं वायुर्ज्योतिरापः पृथिवीमिंद्रियं मनोन्नमन्नाद्वीर्यं तपो मंत्राः कर्म

लोकेषुनामचसयथेमाः नद्यः स्पंदमानाः सामुद्रायणाः समुद्रं प्राप्यास्तंगछंतिभि
द्येतेतासांनामरूपेसमुद्रइत्येवंप्रोच्यतएवमेवास्यपरिद्रष्टुरिमाःषोडशकलाः
पुरुषायणाःपुरुषंप्राप्यास्तंगछंतिभिद्येतेतासांनामरूपेपुरुषइत्येवंप्रोच्यते
सएषषोडशकलोमृतोभवति तदेषश्लोकः अराइवरथनाभौकलायस्मिन्प्रति
ष्ठिताः तंवेद्यंपुरुषंवेदयथामावोमृत्युःपरिव्यथइतितान्होवाचैतावदेवाहमेत
त्परंब्रह्मवेदनातःपरमस्तीतितेतमर्चयंतस्त्वंहिनःपितायोस्माकमविद्या
याःपरंपारंतारयसीतिनमःपरमर्षिभ्योनमःपरमर्षिभ्यः ६ षष्ठःप्रश्नः॥
इत्यथर्ववेदप्रश्नोपनिषत्समाप्ताद्वितीया॥२॥ ॐ ब्रह्मविद्यांप्रवक्ष्यामि
सर्वज्ञानमनुत्तमं यत्रोत्पत्तिंलयंचैवब्रह्मविष्णुमहेश्वराः ॐ प्रसादात

समुत्पत्यस्य विप्रो सद्भुतकर्मणः रहस्यं ब्रह्मविद्यायां ध्रुवाग्निः संप्रचक्षते ॐमि
त्येकाक्षरं ब्रह्म यदुक्तं ब्रह्मवादिभिः शरीरं तस्य वक्ष्यामि स्थानं कालं लयं त
था तत्र देवास्त्रयः प्रोक्ता लोका वेदास्त्रयोग्नयः तिस्रो मात्रा अर्द्धमात्रा च अक्षरस्य शि
वस्य च ऋग्वेदो गार्हपत्यश्च पृथिवी ब्रह्म एव च अकारस्य शरीरं तु व्याख्यातं ब्रह्म
वादिभिः यजुर्वेदोन्तरिक्षं च दक्षिणाग्निस्तथैव च विष्णुश्च भगवान्देव उकारः प
रिकीर्त्तितः सामवेदस्तथा द्योश्चाहवनीयस्तथैव च ईश्वरः परमो देवो मकारः परिकी
र्त्तितः सूर्यमंडलमाभाति अकारः शंखमध्यगः उकारश्चंद्रसंकाशस्तस्य मध्ये व्यव
स्थितः मकारस्त्वाग्नि संकाशो विधूमो विद्युतोपमः तिस्रो मात्रास्तथा ज्ञेया सो
मसूर्याग्नितेजसः शिखा च दीपसंकाशा यस्मिन्नु परिवर्त्तते अर्द्धमात्रा तथा ज्ञेया

प्रणवस्योपरि स्थिता पद्मसूत्रनिभा सूक्ष्मा शिखा या दृश्यते परा॥ सा नाडी सूर्यसं
काशा सूर्यं भित्वा तथापरं द्वासप्ततिसहस्राणि सूर्यं भित्वा तु मूर्द्धनि वरदः सर्वभू
तानां तु व्याप्यैव तिष्ठति॥ कांस्यघंटानिनादस्तु यथा लीयति शांतये ॐकारस्तु तथा यो
ज्यः शांतये सर्वमिच्छता यस्मिन्संलीयते शब्दस्तत्परं ब्रह्म गीयते ध्रुवं हि चिंतयेद्ब्रह्म
सोमृतत्वाय कल्पते सोमृतत्वाय कल्पत इति॥ इत्यथर्ववेदे ब्रह्मविद्योपनिषत्समा
प्ता २ ॐ हरिः॥ संप्रवक्ष्याम्यभिधारणं योगसिद्धये यां प्राप्य न पुनर्जन्म योगयु
क्तस्य जायते वेदतत्वार्थविहितं यथोक्तं हि स्वयंभुवा निःशब्दं देशमास्थाय तत्रास
नमवस्थितः कूर्मोंगानीव संहृत्य मनो हृदि निरुध्य च मात्राद्वादशयोगेन प्र
णवेन शनैः शनैः पूरयेत्सर्वमात्मानं सर्वद्वारान्निरुध्य च उरोमुखकटिग्रीवं

१४

किंचिद्दूर्ध्वमुन्नतं प्राणान्संचारयेद्योगी नासाभ्यंतरचारिणः भूत्वा तत्र गतः प्राणः श
नैरथ समुत्सृजेत् स्थिरमात्मा दृढं कृत्वा ह्यंगुष्ठेन समाहितः द्वे तु गुल्फे तत्र कुर्वीत जंघे
चैव त्रयस्त्रयः द्वौ जानुनि तथोरुभ्यां गुदे शिश्ने त्रयस्त्रयः वायोरायतनं चात्र नाभिदेशे
समाश्रयेत् तत्र नाडी सुषुम्ना तु नाडीभिर्बहुभिर्वृता अनुरक्ताश्च पीताश्च कृष्णा
स्ताम्रविलोहिताः अतिसूक्ष्मां च तन्वीं च शुक्लां नाडीं समाश्रयेत् ततः संचारयेत्प्रा
णान्नूर्णनाभीव तंतुना ततो रक्तोत्पलाभासं पुरुषायतनं महत् दहरं पुंडरीकं तु वे
दांतेषु निगद्यते तद्भित्त्वा कंठमायाति तां नाडीं पूरयन् शनैः मनसस्तु क्षुरं
गृह्य सुतीक्ष्णं बुद्धिनिर्मलं पादस्योपरि संभूज्य तद्रूपं नाम कृंतयेत् । मनो
द्वारेण तीक्ष्णेन योगमाश्रित्य नि[illegible]त्यशः इंद्रवज्र इति प्रोक्तो मर्मजंघानुकीर्ति

*(left margin:)* Ih

१४

तं तद्ध्यानबलयोगेन धारणाभिर्निकृंतयेत् उरोमध्ये तु संस्थाप्य मर्मप्राण विमो
चनं चतुरभ्यासयोगेन छिंद्येदनवशंकितः ततः कंठांतरे योगी समूहं नाडिसंचयं
एकोत्तरं नाडिशतं तासां मध्ये वरा स्मृता इडारहा तु वामेन पिंगला दक्षिणेन तु
तयोर्मध्ये वरं स्थानं यस्तं वेद स वेदवित् सुषुम्णा तु परे लीना विरजा ब्रह्मरूपिणी
द्वासप्ततिसहस्राणि प्रतिनाडीषु तैतिलं छिद्यंते ध्यानयोगेन सुषुम्नैका न भिद्य
ते योगनिर्मलधारेण क्षुरेणानलवर्च्चसा छिंदेन्नाडीशतं धीरः प्रभावादिहज
न्मनि २ जातीपुष्पसमो योगी यथा वास्यति तैतिलं एवं शुभाशुभैर्भावैः सा ना
डीतां विभावयेत् तद्भाविताः प्रपद्यंते पुनर्जन्मविवर्जिताः ततो विदितचि
त्तस्तु निःशब्दं देशमास्थितः निःसंगस्तत्त्वयोगज्ञो निरपेक्षः शनैः शनैः

१५

15

पाशं छित्वा यथा हंसो निर्विशंकः खमुत्क्रमेत् छिन्नपाशस्तथा जीवः संसारं तरते त
दा यथा निर्वाणकाले तु दीपो दग्ध्वा लयं व्रजेत् तथा सर्वाणि कर्माणि योगी दग्ध्वा ल
यं व्रजेत् प्राणायामसुतीक्ष्णेन मात्राधारेण योगवित् वैराग्योपलघृष्टेन छित्वा
तं तु न बध्यते अमृतत्वं समाप्नोति यदा कामात्समुच्यते सर्वैषणा विनिर्मुक्तो
छित्वा तं तु न बध्यते छित्वा तं तु न बध्यत इति इत्यथर्ववेदे क्षुरिकोपनिषत्स
माप्ता चतुर्थी ॥४॥ ॐ अष्टपादं शुचिं हंसं त्रिसूत्रमणुमव्ययं त्रिवर्त्मानं तेजसैं सर्वः सें धं
पश्यन्न पश्यति भूतसंमोहने काले भिन्ने तमसि वैश्वरे अंतः पश्यति सत्त्वस्थो
निर्गुणं गुणगह्वरे अशक्यः सोन्यथा द्रष्टुं ध्येयमानः कुमारकः विकारजं
ननीमायामष्टरूपामजां ध्रुवां ध्यायते ध्यासितव्येन तन्यते प्रेरिता पुनः ॥ सूत्रय १५

सिततेन

तेपुरुषार्थंचतेनैवाधिष्ठितापुरा॥ गोरनादवती सातुजनित्रीभूतभाविनी अ
सितासितरक्ताचसर्वकामदुघाविभोः पिबंतेनामविषयमसंख्याताः कुमारकाः
एकस्तुपिबतेदेवं स्वच्छंदेनवत्सानुगः ध्यानक्रियाभ्यांभगवान्भुंक्तेसौप्रथमंप्रभुः
सर्वसाधारणींदोग्ध्रींपिज्यमानांसुयज्वभिः पश्यंत्यस्यांमहात्मानंसुवर्णंपिप्प
लाशनं मुदासीनंध्रुवंहंसंस्नातकाध्वर्यवोहुयन्न शंसंतमनुशंसंतिबह्वृचाः
शास्त्रकोविदाः रथंतरंबृहत्साम्निसत्येवेतेचगीयते मंत्रोपनिषदंब्रह्मपदक्र
मसमन्वितं पठंतेभार्गवाह्येतामथर्वाणोभृगूत्तमाः १ ब्रह्मचारीचव्रात्यश्चस्कं
भोप्युपस्थितस्तथा अनड्वान्नोहितोछिष्टः पठ्यतेभृगुविस्तरे कालःप्राणा
श्चभगवानात्मापुरुषएवच शर्वोभवश्चरुद्रश्चईश्वरःपुरुषस्तथा प्रजापति
र्मनुः

शा

पर्ण

दै

नूरो

विराट् चैव पार्थिवः सलिलमेव च स्तूयते मन्त्रसंयुक्तैरथर्वविहितै विभुः तं षड्विंश
कमित्येके सप्तविंशमथापरे पुरुषं निर्गुणं सांख्यमथर्वशिरसो विदुः चतुर्वि
शतिसंख्याकमव्यक्तं व्यक्तदर्शिनं अद्वैतं द्वैतमित्येतं त्रिधा तं पंचधा तथा ब्र
ह्माद्यं स्थावरान्तं च पश्यन्ते ज्ञानचक्षुषः तमेकमेव पश्यन्ति परिशुद्धं विभुं द्विजाः ॥
यस्मिन्सर्वमिदं प्रोतं ब्रह्म स्थावरजंगमं तस्मिन्नेव लयं यांति बुद्बुदाः सागरे य
था यस्मिन्भावाः प्रलीयन्ते लीनाः स्युर्व्यक्ततां ययुः नश्यन्ते व्यक्ततां भूयो जायं
ते बुद्बुदा इव क्षेत्रज्ञाधिष्ठितं चैव कारणैर्व्यज्यते ध्रुवं एवं सहस्रशो देवं पर्य्यस्यं
तं पुनः पुनः य एवं श्रावयेच्छ्राद्धे ब्राह्मणान्नियतव्रतः अक्षय्यमन्नपानं च पि
तॄणां चोपतिष्ठते ब्रह्मब्रह्मविधानं तु ये विदुर्ब्राह्मणादयः ते लयं यांति त

त्रैवलीनाः स्युर्ब्रह्मशायिने लीनाः स्युर्ब्रह्मशायिन इति २ इत्यथर्ववेदे चूलिको
पनिषत्समाप्ता पंचमी ५ ॐ देवा ह वै स्वर्गं लोकमगमंस्ते रुद्रमपृच्छन्को भवा
निति सोऽब्रवीदहमेकः प्रथममासं वर्त्तामि च भविष्यामि च नान्यः कश्चिन्मत्तो
व्यतिरिक्त इति सोंतरादंतरं प्राविशद्दिशश्चांतरं प्राविशत्सोहं नित्यानित्यो व्यक्ताव्यक्तो
ब्रह्माब्रह्माहं प्राक्प्रत्यंचोदक्दक्षिणामुदंचोहमधश्चोर्ध्वं चाहं दिशश्च प्रदिशश्चा
हं पुमानपुमान्स्त्रीया चाहं सावित्र्यहं गायत्र्यहं त्रिष्टुब्जगत्यनुष्टुप्चाहं छंदोहं सत्यो
हं गार्हपत्यो दक्षिणाग्निराहवनीयोहं गौरहं गौर्य्यहमृगहं यजुरहं सा
माहमथर्वांगिरसोहं ज्येष्ठोहं श्रेष्ठोहं वरिष्ठोहमापोहं तेजोहं गुह्योहमरण्योह
मक्षरं क्षरमहं पुष्करमहं पवित्रमहमुग्रं च बहिश्च पुरस्ताज्ज्योतिरित्यह

१७ 17

मेकः सर्वेभ्यो मामेव स सर्वस्स मा यो मां वेद स देवान्वेद स सर्वांश्च वेदान्सांगानपि ब्रह्म ब्राह्म
णैश्च गां गोभिर्ब्राह्मणान्ब्राह्मण्येन हविः हविषायुरायुषा सत्येन सत्यं धर्मेण धर्मं त
र्पयामि स्वेन तेजसा ततो ह वै ते देवा रुद्रमपृच्छंस्ते देवा रुद्रमपश्यंस्ते देवा रुद्रम
ध्यायंस्ते देवा ऊर्ध्वबाहवो रुद्रं स्तुवंति १ ॐ यो वै रुद्रः स भगवान्यश्च ब्रह्मा तस्मै वै
नमो नमः १ यो वै रुद्रः स भगवान्यश्च विष्णुस्तस्मै वै नमो नमः २ यो वै रुद्रः स
भगवान्यश्च स्कंदस्तस्मै वै नमो नमः ३ यो वै रुद्रः स भगवान्यश्चेंद्रस्तस्मै
वै नमो नमः ४ यो वै रुद्रः स भगवान्यश्चाग्निस्तस्मै वै नमो नमः ५ यो वै रु
द्रः स भगवान्यश्च सूर्यस्तस्मै वै नमो नमः ७ यो वै रुद्रः स भगवान्यश्च सो
मस्तस्मै वै नमो नमः ८ यो वै रुद्रः स भगवान्ये चाष्टौ ग्रहास्तस्मै वै नमो नमः ९

१७

योवैरुद्रः सभगवान्यचाष्टौप्रतिग्रहास्तस्मैवैनमोनमः १० योवैरुद्रः सभग
वान्याचभूस्तस्मैवैनमोनमः ११ योवैरुद्रः सभगवान्यश्चभुवस्तस्मैवैनमोन
मः १२ योवैरुद्रः सभगवान्यश्चस्वस्तस्मैवैनमोनमः १३ योवैरुद्रः सभग
वान्यश्चमहस्तस्मैवैनमोनमः १४ योवैरुद्रः सभगवान्याचपृथिवीत
स्मैवैनमोनमः १५ योवैरुद्रः सभगवान्यश्चांतरिक्षंतस्मैवैनमोनमः १६ योवै
रुद्रः सभगवान्याचद्यौस्तस्मैवैनमोनमः १७ योवैरुद्रः सभगवान्याश्चाप
स्तस्मैवैनमोनमः १८ योवैरुद्रः सभगवान्यच्चतेजस्तस्मैवैनमोनमः १९
योवैरुद्रः सभगवान्यश्चकालस्तस्मैवैनमोनमः २० योवैरुद्रः सभग
वान्यश्चयमस्तस्मैवैनमोनमः २१ योवैरुद्रः सभगवान्यश्चमृत्युस्तस्मैवै

नमोनमः २२ योवैरुद्रः सभगवान्यश्चामृतं तस्मैवैनमोनमः २३ योवैरुद्रः सभगवान्य
श्चाकाशं तस्मैवैनमोनमः २४ योवैरुद्रः सभगवान्यच्च विश्वं तस्मैवैनमोनमः २५ यो
वैरुद्रः सभगवान्यच्च स्थूलं तस्मैवैनमोनमः २६ योवैरुद्रः सभगवान्यच्च सूक्ष्मं तस्मैवै
नमोनमः २७ योवैरुद्रः सभगवान्यच्च शुक्लं तस्मैवैनमोनमः २८ योवैरुद्रः सभग
वान्यच्च कृष्णं तस्मैवैनमोनमः २९ योवैरुद्रः सभगवान्यच्च कृत्स्नं तस्मैवैनमोन
मः ३० योवैरुद्रः सभगवान्यच्च सत्यं तस्मैवैनमोनमः ३१ योवैरुद्रः सभगवान्
यश्च सर्वं तस्मैवैनमोनमः ३२ भूस्ते आदिर्मध्यं भुवस्ते स्वस्ते शीर्षं विश्वरूपोसि ब्रह्मैक
स्त्वंद्विधा त्रिधा वृद्धिस्त्वं शान्तिस्त्वं पुष्टिस्त्वं हुतमहुतं दत्तमदत्तं सर्वं विश्वमविश्वं
कृतमकृतं परमपरं परायणं च त्वं अपाम सोमममृता अभूमागन्म ज्योतिरवि

२८

सामदेवान् किन्नूनमस्मान्कृणवदरातिः किमुधूर्त्तिरमृतंमर्त्यस्य सोमसूर्यपुरस्तात्
सूक्ष्मः पुरुषः सर्वंजगद्धितंवाएतदक्षरं प्राजापत्यंसौम्यंसूक्ष्मंपुरुषग्राह्यमग्राह्यत्वेन
भावंभावेनसौम्यंसौम्येनसूक्ष्मंसूक्ष्मेनवायवंवायव्येनग्रसतितस्मैमहाग्रासायवैन
मोनमः हृदिस्थादेवताः सर्वाहृदिप्राणाः प्रतिष्ठिताः हृदित्वमस्ययोनित्यंतिस्रोमात्राः
परस्तुसः तस्योत्तरतः शिरोदक्षिणतः पादौयउत्तरतः सः ॐकारः सप्रणवोयः प्रण
वः सप्राणोयः प्राणः ससर्वव्यापीयः सर्वव्यापीसोनंतोयोनंतस्तत्तारंयत्तारंतच्छुक्लंय
च्छुक्लंतत्सूक्ष्मंयद्वैद्युतंतत्परंब्रह्मयत्परंब्रह्मसएकोयएकः सरुद्रोयोरुद्रः स
ईशानोयईशानः सभगवान्महेश्वरः सपरमशिवः २ अथकस्मादुच्यतेॐ:
कारः यस्मादुच्चार्यमाणएवप्राणानूर्ध्वमुत्क्रामयतितस्मादुच्यतेॐकारोथक

१९

19

स्मादुच्यते प्रणवो यस्मादुच्चार्यमाणएव ऋग्यजुःसामाथर्वांगिरसं ब्रह्म ब्राह्मणेभ्यः प्र
णामयति नामयति च तस्मादुच्यते प्रणवः अथ कस्मादुच्यते प्राणः यस्मादुच्चार्य
माणएव प्राणान्सर्वान्परमात्मनि प्रणामयति तस्मादुच्यते प्राणः अथ क
स्मादुच्यते सर्वव्यापी यस्मादुच्चार्यमाणएव यथा स्नेहेन पललपिंडमिव शांतरू
पमोतप्रोतमनुप्राप्नो व्यतिषक्तश्च तस्मादुच्यते सर्वव्यापी अथ कस्मादुच्यते
नंतो यस्मादुच्चार्यमाणएव तिर्यगूर्ध्वमधस्ताच्चास्यांतो न लभ्यते तस्मादुच्यतेनं
तः अथ कस्मादुच्यते तारं यस्मादुच्चार्यमाणएव गर्भजन्मजराव्याधिमरण
संसारमहाभयात्तारयति त्रायते च तस्मादुच्यते तारम् अथ कस्मादुच्यते शुक्लं यस्मा
दुच्चार्यमाणएव सूक्ष्मो भूत्वा शरीराण्यधितिष्ठति सर्वाणि चांगानि अभि

१९

मृशतितिस्मादुच्यतेसूक्ष्ममथकस्मादुच्यतेवैद्युतंयस्मादुच्चार्य्यमाणएवव्यक्तेमह
तितमसिद्योतयतितस्मादुच्यतेवैद्युतमथकस्मादुच्यतेपरंब्रह्मयस्मात्परमपरंपरा
यणंचबृहत्याबृंहयतितस्मादुच्यतेपरंब्रह्माथकस्मादुच्यतेएकः॥यस्मात्प्राणान्स
र्वान्संभक्ष्यसंभक्षणेनाजःसंसृजतिविसृजतिचतीर्थमेकेव्रजंतितीर्थमेकेदक्षि
णाःप्रत्यंचउदंचप्राचोभिव्रजंत्येकेतेषांसर्वेषामिहसंगतिःसाकंसएकोभूतश्चरति
प्रजानांतस्मादुच्यतेएकः अथकस्मादुच्यतेरुद्रोयस्मादृषिभिर्नान्यैर्भक्तैर्द्रुतम
स्यरूपमुपलभ्यतेतस्मादुच्यतेरुद्रः अथकस्मादुच्यतेईशानोयःसर्वान्देवानी
शतईशानीभिर्जननीभिश्चशक्तिभिः अभित्वाशूरनोनुमोदुग्धाइवधेनवः
ईशानमस्यजगतःस्वर्दृशमीशानमिंद्रतस्थुषइतितस्मादुच्यतेईशानोथक

२०
20

स्मादुच्यतेभगवान्महेश्वरोयस्माद्भक्ताज्ञानेनभजत्यनुगृह्णातिचवाचंसंसृज
तिविसृजतिचसर्वान्भावान्परित्यज्यात्मज्ञानेनयोगैश्वर्येणमहतिमहीयतेतस्मा
दुच्यतेभगवान्महेश्वरस्तदुद्रचरितं ४ एकोहंदेवः प्रदिशोनुसर्वाः पूर्वोहंजातः स
उगर्भेअंतः सएवजातः सजनिष्यमाणः प्रत्यग्जनास्तिष्ठतिसर्वतोमुखः॥ एको
रुद्रोनद्वितीयायतस्थेयइमांल्लोकानीशतईशनीभिः प्रत्यग्जनास्तिष्ठतिस
र्वतश्चांतकालेसंसृज्यविश्वाभुवनानिगोप्तायोयोनिंयोनिमधितिष्ठत्येकोये
नेदंसर्वंविचरंतिसर्वं तमीशानंवरदंदेवमीड्यंनिचाय्येमांशांतिमत्यंतमेति हि
मांहित्वाहेतुजालस्यमूलंबुध्यासिंचितंस्थापयित्वातुरुद्रे रुद्रमेकत्वमाहुः
शाश्वतंवैपुराणमिषमूर्जेणपशवोऽनुनामयंतंमृत्युपाशान् तदेतेनना

२०

त्मन्नेतेनार्धंचतस्वमात्रेण शांतिंसंसृजति पशुपाशविमोक्षणी या साप्रथमा मात्रा ब्रह्मदेव
त्यारक्तावर्णेनयस्तांध्यायते नित्यं सगच्छेद्ब्राह्म्यं पदं यासाद्वितीयामात्रा विष्णुदेवत्याकृ
ष्णावर्णेनयस्तांध्यायतेनित्यंसगच्छेद्वैष्णवंपदं यासातृतीयामात्राईशानदेवत्याक
पिलावर्णेनयस्तांध्यायतेनित्यंसगच्छेदैशानंपदं यासार्धचतुर्थीमात्रासर्वदेवत्या
व्यक्तीभूतारवंविचरतिशुद्धस्फटिकसन्निभावर्णेनयस्तांध्यायतेनित्यंसगच्छेत्पदम
नामयं तदेतदुपासीतमुनयोवाग्वदंतिनतस्यग्रहणमयंयथाविहितउत्तरेणायेन
देवायांतियेनपितरोयेनऋषयः परमपरंपरायणंचेति वालाग्रमात्रंहृदयस्यमध्येवि
श्वंदेवजातरूपंवरेण्यं तमात्मस्थंयेनुपश्यंतिधीरास्तेषांशांतिर्भवतिनेतरेषां
यस्मिन्क्रोधंयाचतृष्णाक्षमाचतृष्णांहित्वाहेतुजालस्यमूलं बुद्ध्यासंचितं

२१

२१

स्थापयित्वा तु रुद्रमेकत्वमाहुः ॥ ६ ॥ रुद्रो हि शाश्वतेनैव पुराणेनेदमूर्जेन तपसा नियंता
ग्निरिति भस्म वायुरिति भस्म जलमिति भस्म स्थलमिति भस्म व्योमेति भस्म सर्वं
ह वा इदं भस्म मन एतानि चक्षूंषि यस्माद्व्रतमिदं पाशुपतं यद्भस्मनांगानि संस्पृशेत्त
स्माद्व्रतं तदेतत्पाशुपतं पशुपाशविमोक्षणाय ५ यो रुद्रो अग्नौ यो अप्स्वंतर्य ओषधीवी
रुध आविवेश य इमा विश्वा भुवनानि चाक्लृप्ते तस्मै रुद्राय नमो अस्त्वग्नये ॥ यो रु
द्रो अग्नौ यो रुद्रो अप्स्वंतर्यो रुद्र ओषधीर्वीरुध आविवेश यो रुद्र इमा विश्वा भुवना
नि चाक्लृप्ते तस्मै रुद्राय वै नमो नमः यो रुद्रो जप्सु यो रुद्र ओषधीषु यो वनस्प
तिषु येन रुद्रेण जगदूर्ध्वं धारितं पृथिवी द्विधा त्रिधा धर्त्ता धारिता नागा येंऽतरि
क्षे तस्मै रुद्राय वै नमो नमः मूर्द्धानमस्य संसेव्याथर्वा हृदयं च यत् ॥ मस्ति

२१

स्कादूर्ध्वः प्रेरयन्पवमानोऽधिशीर्षतः तद्वा अथर्वणः शिरो देवकोशः समुब्जितः तत्प्रा
णो अभिरक्षति शिरो अन्नमयो मनः न च द्विवो देवयजने न गोप्तानं चांतरिक्षाणि न च
भूमय इमाः यस्मिन्निदं सर्वमोतप्रोतं तस्मादन्यन्न परं किंचनास्ति न तस्मात्पूर्वं न
परं तदस्ति न भूतं नोत भव्यं यदासीत्सहस्रपादेकमूर्द्धा व्याप्तं स एवेदमावरीवर्ति भू
तं अक्षरात्संजायते कालः कालाद्व्यापक उच्यते व्यापको भगवान्रुद्रो भोगायमानो
यदा शेते रुद्रस्तदा संहार्यते प्रजाः उच्छ्वसिते तमो भवति तमस आपः अप्स्वंगु
ल्या मथितं शिशिरे शिशिरं मथ्यमानं फेनं भवति फेनादंडं भवत्यंडाद्ब्रह्मा भवति
ब्रह्मणो वायुर्वायोरोंकार ॐकारात्सावित्री सावित्र्या गायत्री गायत्र्या लोका भवं
ति अर्चयंति तपः सत्यं मधु क्षरंति यद्ध्रुवं एतद्धि परमं तपः आपो ज्योती रसो

२२

ऋतं ब्रह्म भूर्भुवः स्वरोंनमः ६ य इदमथर्वशिरो ब्राह्मणोऽधीते ऽश्रोत्रियः श्रोत्रियो भवत्यनुपनीतोभवति सोऽग्निपूतो भवति स वायुपूतो भवति स सूर्यपूतो भवति स सोमपूतो भवति स सत्यपूतो भवति स सर्वपूतो भवति स सर्वैर्ज्ञातो भवति स सर्वैर्वेदैरनुध्यातो भवति स सर्वेषु तीर्थेषु स्नातो भवति तेन सर्वैः क्रतुभिरिष्टं भवति गायत्र्याः षष्टिसहस्राणि जप्तानि भवंति इतिहासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवंति प्रणवानामयुतं जप्तं भवत्या चक्षुषः पंक्तिं पुनात्यासप्तमात्पुरुषयुगान्पुनातीत्याह भगवानथर्वशिरः सकृज्जप्त्वैव शुचिः पूतः कर्मण्यो भवति द्वितीयं जप्त्वा गणाधिपमेवाप्नोति तृतीयं जप्त्वैवमेवानुपश्यत्योंसत्यं ७

इति श्रीअथर्ववेदेऽथर्वशिरोपनिषत्समाप्ता षष्ठी ॥६॥ ॐ पिप्पलादं गिरास्त

२२

नत्कुमारश्चाथर्वणं भगवंतं पप्रच्छ किमादौ प्रयुक्तं ध्यानं ध्यायितव्यं किं तद्ध्यानं को वा ध्या
ता किं ध्येयमित्यथैतेभ्योथर्वा प्रत्युवाच ॐ मित्येतदक्षरमादौ प्रयुक्तं ध्यानं ध्यायि
तव्यमोमित्येतदक्षरस्य पादाश्चत्वारो देवाश्चत्वारो वेदाश्चत्वारश्चतुष्पाद एतदक्षरं
परं ब्रह्म पूर्वास्य मात्रा पृथिव्यकारः स ऋग्भिः स ऋग्वेदो ब्रह्मा वसवो गायत्री गार्ह
पत्या द्वितीयांतरिक्षं उकारः स यजुर्भिर्यजुर्वेदो रुद्रो रुद्रास्त्रिष्टुप् दक्षिणाग्निस्तृ
तीया द्यौर्मकारः स सामभिः सामवेदो विष्णुरादित्या जगत्याहवनीयो यावसानेस्य च
तुर्थ्यर्द्धमात्रा सा महोल्लोकोलुप्तमकारः सोमहाथर्वणैर्मंत्रैरथर्ववेदः संवर्तकाग्नि
मरुतो विराडेकऋषिरंगिरा भास्वती स्मृता प्रथमा रक्ता ब्राह्मी ब्रह्मदेवत्या द्विती
या शुक्ला रौद्री रुद्रदेवत्या तृतीया कृष्णा विद्युन्मती विष्णुदेवत्या चतुर्थी सर्व

वर्णा पुरुषदेवत्या स एष पुरुष ॐकारश्चतुष्पाद श्चतुः शिरश्चतुर्थ्यर्द्धमात्रा ह्रस्वदीर्घप्लु
तः ॐ ॐ ॐ इति त्रिरुक्तश्चतुर्थः शांतात्मा प्लुतप्रयोगेन सममित्यात्मज्योतिः सकृ
दावर्त्तितः स एष सर्वान्प्राणान्सकृदुच्चारितमात्रः स एव ह्यूर्ध्वमुत्क्रामयतीत्योंकारः १
प्रणवः सर्वान्प्राणान्प्रणामयति नमयति चैतस्मात्प्रणवश्चतुर्धावस्थित इति वेदं देवयो
नि ईर्वश्चेति संहर्त्ती सर्वेभ्यो दुःखभयेभ्यः संतारयति तारणात्तानि सर्वाणीति वि
ष्णुः सर्वाञ्जयति ब्रह्म बृहत्त्वात्सर्वकारणानि संप्रतिष्ठाप्य ध्यानाद्विष्णुर्मनसि ना
दांति परमात्मनि स्थाप्य ध्येयमीशानं प्रध्यायंति ईशावास्यं सर्वमिदं प्रयुक्ते ब्रह्मविष्णु
रुद्रेंद्राः संप्रसूयंति सर्वाणि चेंद्रियाणि सह भूतानि कारणं सर्वमेश्वर्य्यं संपन्नं शि
वमाकाशं मध्ये ध्रुवस्थं ब्रह्माविष्णुश्च रुद्रश्चईश्वरः शिव एकश्च ॥ पंचधा पंचदैव

त्यः प्रणवः परिपठ्यते तत्राधिकं क्षणमेकमास्यायक्रतुशतस्यापि फलमवाप्नोति कृत्स्नमों
कारगतं च सर्वविज्ञानेन योगध्यानानां शिव एको ध्येयः शिवओंकारः सर्वमन्यत्परित्यज्यैता
मधीत्य द्विजो गर्भवासान्मुच्यते गर्भवासान्मुच्यत इति ॥२॥ इत्यथर्ववेदेथर्वशिरोपनि
षत्समाप्ता ॥७॥ ॐ पंचात्मकं पंचसु वर्त्तमानं षडाश्रयं षड्गुणयोगयुक्तं तत्सप्तधातु
त्रिमलं द्वियोनि चतुर्विधाहारमयं शरीरं पंचात्मकमिति कस्मात्पृथिव्यापस्तेजो
वायुराकाशमित्यस्मिन्पंचात्मके शरीरे का पृथिवी का आपः किं तेजः को वायुः किं
चाकाशं तत्र यत्कठिनं सा पृथिवी यद्द्रवं ता आपः। यदुष्णं तत्तेजो यत्संचरति स वा
युर्यत्सुषिरं तदाकाशं तत्र पृथिवी धारणे आपः पिंडीकरणे तेजः प्रकाशने वायु
र्व्यूहने आकाशमवकाशप्रदाने पृथक्चक्षुः श्रोत्रोपलब्धौ त्वक्स्पर्शे चक्षुषी

रूपे जिह्वारसने नासिका घ्राणो उपस्थ आनंदे अपानमुत्सर्गे बुध्या बुध्यति मनसा सं
कल्पयति वाचा वदति ६ षड्रसं कस्मान्मधुराम्ललवणतिक्तकटुकषाय रसान्वि
दतीति षड्ज ऋषभ गांधार मध्यम पंचम धैवत निषादाश्चेति ३ इष्टानिष्टशब्दसंज्ञा प्रणिधा
नाद्दशविधा निभवंति १ सप्तधातुकं कस्मात् शुक्लो रक्तः कृष्णो धूम्रः पीतः कपि
लः पांडुर इति यथा देवदत्तस्य द्रव्यादि विषया जायंते परस्परं सौम्यगुणत्वात् षड्विं
धो रसो रसाच्छोणितं शोणितान्मांसं मांसान्मेदो मेदसः स्नावा स्नाव्नो स्थीन्यस्थि
भ्यो मज्जा मज्जातः शुक्रं शुक्रशोणितसंयोगादावर्त्तते गर्भो हृदि व्यवस्थानीति हृ
दयेंतराग्निस्थाने पित्तं पित्तस्था वायुर्वायुतो हृदयं प्राजापत्यात्क्रमात् २ तदिदं शु
क्रं ऋतुकाले प्रयोगादेकरात्रोषितं कललं भवति सप्तरात्रोषितं बुद्बुदमर्द्धमासा

भ्यंतरे पिंडं रभ्यं कठिनं मासद्वयेन शिरोग्रीवा मासत्रयेन पादप्रदेशश्चतुर्थे गुल्फो जठरं कटि
प्रदेशः पंचमे पृष्ठिवंशः षष्ठे मुखनासिकाक्षिश्रोत्राणि सप्तमे जीवेन संयुक्तोऽष्टमे सर्वसंपूर्णः
पितृरेतोतिरेकात्पुरुषो मातृरेतोतिरेकात्स्त्र्युभयबीजतुल्यत्वान्नपुंसकं व्याकुलित
मनसोंधाः खंजाः कुब्जा वामनका भवंत्यन्योन्यवायुपरिपीडितशुक्रद्वैध्याद्द्विधात
नुः स्याद्युग्माः प्रजायंते पंचात्मकः समर्थः पंचात्मिका चेतसा बुद्धिर्गंधरसादिज्ञानाक्ष
राक्षरमोंकारं चिंतयतीति तदेकाक्षरं ज्ञात्वाऽष्टौ प्रकृतयः षोडश विकाराः अथ मात्राशितपी
तनाडीसूत्रगतेन प्राणोप्यायतेथ नवमे मासि सर्वलक्षणज्ञानसंपूर्णो भवति पू
र्वजातीः स्मरति शुभाशुभं च कर्म विंदति २ आहारादि विधा भुक्ताः पीता नानाविधाः
स्तनाः जातश्चाहं मृतश्चाहं जन्म जन्म पुनः पुनः मृतश्चाह पुनर्जातो जातश्चाह पु

नर्द्धतः नानायोनिसहस्राणि मयोषितानियानि वै मातरोविविधादृष्टाः पितरः सुहृद
स्तथा अवाङ्मुखः पीडितोहं जंतुभिश्च समन्वितः मयापरिजनस्यार्थे कृतंकर्मशु
भाशुभं एकाकीतेनदह्येहंगतास्तेफलभोगिनः यदियोन्याः प्रमुच्येहं तत्प्रपद्येपरमे
श्वरं अशुभक्षयकारकं परमुक्तिप्रदायकं॥ यदियोन्याः प्रमुच्येहं तत्प्रपद्येनारायणं अ
शुभक्षयकारकं परमुक्तिप्रदायकं॥ अथयोनिद्वारं संप्राप्तोयंत्रेणापीड्यमानोमहतादुःखे
नजातमात्रस्तु वैष्णवेन वायुना संस्पृष्टस्तदानस्मरति जन्ममरणानि नचकर्म
शुभाशुभं विंदति ४ शरीरं कस्मात् अग्नयोह्यत्राश्रयंते ज्ञानाग्निर्दर्शनाग्निः कोष्ठाग्नि
रिति तत्र कोष्ठाग्निर्नाम अशितपीतलेह्यचोष्यं पचतीति दर्शनाग्नी रूपाणां दर्शनंक
रोति ज्ञानाग्निः शुभाशुभं कर्म विंदतीति त्रीणिस्थानानि भवंति मुखे आहवनीय

उदरे गार्हपत्यो हृदि दक्षिणाग्निरात्मा यजमानो मनो ब्रह्मा लोभादयः पशवः धृतिर्दीक्षा
संतोषश्च बुद्धीन्द्रियाणि हवींषि शिरः कपालं केशा दर्भा मुखमंतर्वेदिश्चतुष्कपालं शि
रः षोडश पार्श्वदंत्योष्ठपटलानि सप्तोत्तरं मर्मशतं साशीतिकं संधिशतं सनवकं स्ना
युशतं सप्त शिराशतानि पंच च मज्जाशतान्यस्थीनि च ह वै त्रीणि शतानि षष्ठिश्चा
र्द्धचतस्रो रोमाणि कोट्यो हृदयं पलान्यष्टौ द्वादश पलानि जिह्वा पित्तप्रस्थं कफस्याढकं
शुक्लं कुडवं मेदः प्रस्थौ द्वावनियतं मूत्रपुरीषमाहारपरिमाणात्पैप्पलादं मोक्षशास्त्रं
पैप्पलादं मोक्षशास्त्रमिति ५ इत्यथर्ववेदे गर्भोपनिषत्समाप्ता ॥८॥ ॐ अथातो म
होपनिषदमेव तदाहुरेको ह वै नारायण आसीन्न ब्रह्मा न ईशानो नाग्निषोमौ नेमे द्यावा
पृथिव्यौ न नक्षत्राणि न सूर्यः स एकाकी न रमते तस्य ध्यानांतस्थस्य यज्ञस्तोममुच्यते

तस्मिन्पुरुषाश्चतुर्दश जायंते एकाकन्या दशेंद्रियाणि मन एकादशं तेजो द्वादशमहं
२६ कारस्त्रयोदशं प्राणश्चतुर्दश आत्मा पंचदशी बुद्धिः पंच तन्मात्राणि पंच महाभूता
नि स एष पंचविंशकः पुरुषस्तं पुरुषं पुरुषो निवेश्य नास्य प्रधानं संवत्सरा जायंते
26 संवत्सरादधिजायंत इत्यथ पुनरेव नारायणः सोन्यत्कामो मनसा ध्यायते त
स्य ध्यानांतःस्थस्य ललाटात्र्यक्षः शूलपाणिः पुरुषो जायते बिभ्रच्छ्रियं सत्यं ब्रह्मच
र्यं तपो वैराग्यं मन ऐश्वर्यं सप्रणवा व्याहृतय ऋग्यजुः सामाथर्वांगिरसः सर्वा
णि छंदांसि तान्यंगे समाश्रितानि १ अथ पुनरेव नारायणः सोन्यत्कामो मनसा
ध्यायते तस्य ध्यानांतःस्थस्य ललाटात्स्वेदोपतत्ता इमाः प्रतता आपस्तासु तेजो
हिरण्मयमंडं तत्र ब्रह्मा चतुर्मुखोजायत सोध्यायत्पूर्वाभिमुखो भूत्वा व्याहृतिर्व्या २६

हतीर्गायत्रीछंदऋग्वेदः पश्चिमाभिमुखोभूत्वाभुवइति व्याहृतिस्त्रैष्टुभंछंदोयजुर्वेदः उत्तराभिमुखोभूत्वास्वरितिव्याहृतिर्जगतीछंदः सामवेदः दक्षिणाभिमुखोभूत्वाजनयतिव्याहृतिरानुष्टुभंछंदोथर्ववेदः सहस्रशीर्षंदेवं सहस्राक्षं विश्वशंभुवं विश्वतः परमंनित्यंविश्वंनारायणंहरिं विश्वमेवेदंपुरुषंतद्विश्वमुपजीवति अरविंदकृतिं विश्वेश्वरं समुद्रे तेविश्वरूपिणं पद्मकोशप्रतीकाशं लंबत्याकाश संनिभं ॥ हृदयेचाप्यधोमुखंसंतत्यैशीत्केराभिश्च तस्यमध्येमहानग्निर्विश्वार्चिर्विश्वतोमुखं तस्यमध्येवह्निशिखाअनीयोर्ध्वव्यवस्थिता ॥ तस्याःशिखायेमध्येपुरुषः परमात्माव्यवस्थितः सब्रह्मासईशानः सइंद्रः सोक्षरः परमः स्वराट २ परम महोपनिषदं ब्राह्मणोधीतेऽश्रोत्रियःश्रोत्रियोभवत्यनुपनीतउपनीतोभवति

सोऽग्निपूतो भवति स वायुपूतो भवति स सूर्यपूतो भवति स सोमपूतो भवति स सर्वे
[illegible]पूतो भवति स सर्वैर्देवैर्ज्ञातो भवति स सर्वैर्वेदैरनुध्यातो भवति
स सर्वेषु तीर्थेषु स्नातो भवति तेन सर्वैः क्रतुभिरिष्टं भवति॥ गायत्र्याः षष्टिसह
स्राणि जप्तानि भवन्तीति हासपुराणानां रुद्राणां शतसहस्राणि जप्तानि भवं
ति प्रणवानामयुतं जप्तं भवत्याचक्षुषः पंक्तिं पुनात्यासप्तमात्पुरुषयुगात्पुना
तीत्याह भगवान् हिरण्यगर्भो जपेनामृतत्वं गच्छत्यमृतत्वं गच्छति॥ तृतीयः खंडः ३
इत्यथर्ववेदे महोपनिषत्समाप्ता नवमा॥९॥ ॐ अथास्य पुरुषस्य चत्वारि स्थाना
नि भवंति नाभिर्हृदयं कण्ठो मूर्द्धेति तत्र चतुष्पादं ब्रह्म विभाति ॐ शौनको ह वै
महाशालोऽङ्गिरसं भगवंतं पिप्पलादं पप्रच्छ दिव्ये ब्रह्मपुरे संप्रतिष्ठिता भवंति॥

कथंसृजंतिकस्यैषमहिमाबभूवकएषतस्मैसहोवाचब्रह्मविद्यांवरिष्ठांप्राणोह्येषआ
त्मानोमहिमाबभूवदेवानामायुःसदेवानांनिधनमनिधनंदिव्येब्रह्मपुरेविरजंब्र
ह्मनिष्कलंशुभ्रमक्षरंयद्ब्रह्मविभातिसनियछतिमधुकरराजानमाक्षिकवद्य
थामाक्षिकेनतंतुनाजालंविक्षिपतितेनापकर्षतियथैवैषप्राणोयदायदायातिसं
सृष्टमाकृष्यप्राणंदेवतास्ताःसर्वनाड्यःसुषुप्तेश्येनाकाशवद्यथाखंश्येनमाश्रित्य
यातिस्वमालयमेवंसुषुप्तोब्रूतेयथैवैषदेवदत्तोयष्ट्याभिताड्यमानोनयत्येवमिष्टा
पूर्तैःशुभाशुभैर्नलिप्यतेयथाकुमारोनिष्कामआनंदमुपयातितथैवैषदेवदत्तःस्वप्न
स्थानमभियातिवेदएवपरंज्योतिष्कामोज्योतिरानंदयतेभूयस्तेनैवस्वप्नायग
च्छतिपश्यतिजलौकावद्यथाजलौकाग्रमग्रंनयत्यात्मानंनयतिपरंसंधयति

अपरंनापरंत्यजतिसजाग्रदभिधीयतेतथैवैषकपालाष्टकंसंनयतितमेवस्तनइव
लंबतएषदेवयोनिर्यत्रजाग्रतिशुभाशुभमनिरुक्तमस्यसंप्रसारेंतर्यामीख
गःकर्कोटकःपुष्करःपुरुषःप्राणोहिंसापरापरंब्रह्मात्मादेवतावेदयतियएवंवेदस
परंब्रह्मधामक्षेत्रज्ञमुपैति १ अथास्यपुरुषस्यचत्वारिस्थानानिभवंतिनाभि
हृदयंकंठंमूर्ध्नेतितत्रचतुष्पादंब्रह्मविभातिजागरितंस्वप्नंसुषुप्तंतुरीयमितिजा
गरितेब्रह्मास्वप्नेविष्णुःसुषुप्तौरुद्रस्तुरीयेपरमाक्षरंसआदित्यश्चविष्णुश्चेश्व
रश्चसपुरुषःसप्राणःसजीवःसोग्निःसजाग्रतेतेषांमध्येयत्परंब्रह्मविभा
तिस्वयममनस्कमश्रोत्रमपाणिपादंज्योतिर्वर्जितंनतत्रलोकालोकावेदान
वेदादेवानदेवायज्ञानयज्ञामातानमातापितानपितास्नुषानस्नुषाचंडा

लोन चंडालः पौल्कशोनपौल्कशः श्रमणोनश्रमणः पशवोनपशवस्तापसोनतापसा
इत्येकमेवपरंब्रह्मविभातिहृदयाकाशंतद्विज्ञानमाकाशंतत्सुषिरमाकाशंतद्वेद्यं
हृद्याकाशं यस्मिन्निदंसंचरतियस्मिन्निदंसर्वमोतंप्रोतंसंविभोःप्रजाःसत्यपरंनत
त्रदेवालोकाऋषयःपितरईशतेप्रतिबुधाःसर्वविदितहृदिस्थादेवताःसर्वाहृदि
प्राणाःप्रतिष्ठिताःहृदिप्राणश्चज्योतिश्चत्रिवृत्सूत्रंचजन्महतंहृदिचैतन्येतिष्ठ
ति यज्ञोपवीतंपरमंपवित्रंप्रजापतेर्यत्सहजंपुरस्तात् आयुष्यमग्र्यंप्रतिमुंच
शुभ्रंयज्ञोपवीतंबलमस्तुतेजः सशिखंवपनंकृत्वाबहिःसूत्रंत्यजेद्बुधः यद
क्षरंपरंब्रह्मतत्सूत्रमितिधारयेत् सूचनात्सूत्रमित्याहुःसूत्रंनामपरंपदं॥
तत्सूत्रंविदितंयेनसविप्रोवेदपारगः तेनसर्वमिदंप्रोतंसूत्रेमणिगणाइव॥

तत्सूत्रं धारयेद्योगी योगवित्तत्वदर्शिवान् बहिःसूत्रं त्यजेद्विद्वान्योगमुत्तममास्थि
तः ब्रह्मभावमयं सूत्रं धारयेद्यः सचेतनः धारणात्तस्य सूत्रस्य नोच्छिष्टो नाशु
चिर्भवेत् द्वितीयः खंडः २ सूत्रमंतर्गतं येषां ज्ञानयज्ञोपवीतिनां ते वै सूत्रवि
दो लोके ते च यज्ञोपवीतिनः ज्ञानशिखिनो ज्ञाननिष्ठा ज्ञानयज्ञोपवीतिनः॥ ज्ञा
नमेव परं तेषां पवित्रं ज्ञानमुत्तमं अग्नेरिव शिखा नान्या यस्य ज्ञानमयी शिखा॥
स शिखीत्युच्यते विद्वान्नेतरे केशधारिणः कर्मण्यधिकृता ये तु वैदिके ब्राह्म
णादयः तैः संधार्यमिदं सूत्रं क्रियांगं तद्धि वै स्मृतं शिखा ज्ञानमयी यस्य उप
वीतं च तन्मयं ब्राह्मण्यं सकलं तस्य इति ब्रह्मविदो विदुः इदं यज्ञोपवीतं तु पर
मं यत्परायणं विद्वान्यज्ञोपवीती स्यात्स यज्ञः स च योगवित् एको देवः सर्वभूते

गूढः सर्वव्यापी सर्वभूतांतरात्मा कर्माध्यक्षः सर्वभूताधिवासः साक्षी चेता केव
लो निर्गुणश्च एको मनीषी निष्क्रियाणां बहूनामेकं संतं बहुधा यः करोति तमात्मस्थं
येनुपश्यंति धीरास्तेषां शांतिः शाश्वती नेतरेषां आत्मानमरणिं कृत्वा प्रणवं चोत्त
रारणिं ध्याननिर्मथनाभ्यासाद्देवं पश्येन्निगूढवत् तिलेषु तैलं दधनीव सर्पि
रापः स्रोतस्स्वरणीषु चाग्निः एवमात्मात्मनि गृह्यतेसौ सत्येनैनं योनुपश्यति धीरः
॥ ऊर्णनाभिर्यथा तंतून्सृजते संहरत्यपि जाग्रत्स्वप्ने यथा जीवो गच्छत्यागच्छ
ते पुनः पद्मकोशप्रतीकाशं सुषिरं चाप्यधोमुखं हृदयं तद्विजानीयाद्विश्व
स्यायतनं महत् नेत्रस्थं जागरितं विद्यात्कंठे स्वप्नं विनिर्दिशेत् सुषुप्तं हृदय
स्थं तु तुरीयं मूर्ध्नि संस्थितं यदात्मा प्रज्ञयात्मानं संधत्ते परमात्मनि ॥ तेन

३०

संध्याध्यानमेवतस्मात्संध्याभिवंदनं निरूपिता ध्यानसंध्या वाक्कायक्लेशवर्जिता सं-
धिनी सर्वभूतानां सा संध्या ह्येकदंडिनां यतो वाचो निवर्तंते अप्राप्य मनसा सह आनं-
दमेतज्जीवस्य यज्ज्ञात्वा मुच्यते बुधः सर्वव्यापिनमात्मानं क्षीरे सर्पिरिवान्वितं आ-
त्मविद्यातपोमूलं तद्ब्रह्मोपनिषत्परं तद्ब्रह्मोपनिषत्परमिति तृतीयः खंडः ३
इत्यथर्ववेदे ब्रह्मोपनिषत्समाप्ता दशमी १० ॐ अथातः सर्वोपनिषत्सारं संसार-
ज्ञानमधीतमन्त्रसूत्रं शारीरयज्ञं व्याख्यास्यामः तस्मिन्नेव पुरुषशरीरे विनाप्य-
ग्निहोत्रेण विना सांख्ययोगेन संसारविमुक्तिर्भवतीति स्वेन विधिनान्नं भूमौ
निक्षिप्य या ओषधयः सोमराज्ञीरिति तिसृभिरन्नपत इति द्वाभ्यामनुमंत्रय-
ते या ओषधयः सोमराज्ञीर्बह्वीः शतविचक्षणाः बृहस्पतिप्रसूतास्ता नो

३०

मुंचंत्वंहसः यापुष्पिणीर्याअफलाअपुष्पायाश्चपुष्पिणीः बृहस्पतिप्रसूतास्तानोमुं
चंत्वंहसः जीवलानवारिषांमातेवध्राघ्यावधिं यातआयुरुरहरादपरक्षांसिचातया॥
अन्नपतेअन्नस्यनोधेह्यनमीवस्यशुष्मिणः प्रप्रदातारंतारिषउर्जनोदेहिद्विपदे
चतुष्पदे ॐयदन्नमग्निबहुधाविराजंरुद्रैःप्रजग्धंयदिवापिशाचैः सर्वतईशानो
अभयंकृणोतुशिवमीशानायस्वाहा ॐअंतश्चरसिभूतेषुगुहायांविश्वतोमुखः त्वं
यज्ञस्त्वंब्रह्मात्वंरुद्रस्त्वंविष्णुस्त्वंवषट्कारः आपोज्योतीरसामृतंब्रह्मभूर्भुवःस्व
रोंनमः आपःपुनंतुपृथिवींपृथिवीपूतापुनातुमां पुनंतुब्रह्मणस्पतिर्ब्रह्मपूता
पुनातुमां यदुच्छिष्टमभोज्यंयद्वादुश्चरितंमम सर्वंपुनंतुमामापोअसतांचप्रति
ग्रहं स्वमापोमृतमस्यमृतोपस्तरणमस्यमृतंचप्राणेजुहोम्याशिष्यान्तोसि
नो

आ

३१
3/

प्राणाय प्रधानाय स्वाहा अपानाय स्वाहा व्यानाय स्वाहा समानाय स्वाहोदानाय स्वाहेति
कनिष्ठिकयांगुल्यांगुष्ठेन च प्राणे जुहोत्यनामिकयाऽपाने मध्यमया व्याने प्रदेशि
न्या समाने सर्वाभिरुदाने तूष्णीमेकामेकं समो जुहोति द्वे आहवनीये एकां दक्षिणा
ग्नौ वैकां गार्हपत्ये एकां सर्वप्रायश्चित्तीये १ अथापिधानममृतत्वायोपदधामीत्यु
पस्पृश्य पुनरादाय पुनरुपस्पृशेत् सर्वेप्राणानीयो गृहीत्वा हृदयमन्वालभ्य ज
पेत् प्राणाग्निः परमात्मा पंचवायुभिरावृतः अभयं सर्वभूतेषु न भवेहं कदा
चनेति विश्वोसि वैश्वानरो विश्वरूपो वै विश्वं त्वया धार्यते जायमानं विश्वं तु
त्वा हुतयः सर्वाय च ब्रह्मा विश्वामृतोसीति महानवायं पुरुषो योंगुष्ठाग्रे प्रति
ष्ठितः तमद्भिः प्रतिषिंचामि सोस्यांते अमृताया मृतयोनाविन्त्य षडेवाध्यात्मा

३१

एताग्निहोत्रं जुहोमीति सर्वेषामेव सूनुर्भवत्यथ यत्र परिवृत्ताहुतीर्होमयति स्वशरीरे

पत्रं परिवर्त्तयामीति चत्वारोग्नयस्तेषां नामधेयाः तत्र सूर्याग्निर्नाम सूर्यमंड

लाकृतिः सहस्ररश्मिभिः परिवृतः एकर्षिर्भूत्वा मूर्ध्नि तिष्ठति यस्मादुक्तो दर्शना

ग्निर्नाम चतुरांकृतिराहवनीयो भूत्वा मुखे तिष्ठति शारीरोग्निर्नाम जराप्रणाश

हविरवस्कंद्य अर्धचंद्राकृतिर्दक्षिणाग्निर्भूत्वा हृदये तिष्ठति तत्र कोष्ठाग्निर्नामाशित

पीतालीढखादितानि सम्यक् पचति गार्हपत्यो भूत्वा नाभ्यां तिष्ठति प्रायश्चि

त्तीयस्त्वधस्तात्त्रयः स्त्रियो हिमांशुः प्रभुः प्रजननकर्मा २ अस्य शरीरस्य यज्ञस्य

यूपरशनाशोभितस्य कोयजमानः कापत्नी के ऋत्विजः कोध्वर्युः कोहो

ता को ब्राह्मणाछंसी कः प्रस्तोता कः प्रस्तोता कः मैत्रावरुणः क उद्गाता

केसदस्याः का नियज्ञपात्राणिका निहवींषिकावेदिः कोत्तरे वेदिः को द्रोणकलशः कोरथः
कः पशुः के दर्भाः कः स्रुवः का आज्यस्थालीकावाघारौ कावाज्यभागौ कः स्विष्टकृ
कः के प्रयाजाः केनुयाजाः कं शंयोर्वाकः के पत्नीसंयाजाः का दायाका हिंसा को यू
पः का रशना का इध्मः का दक्षिणा किमवभृथमिति। अस्य शरीरयज्ञस्य यूपर
शनाशोभितस्य आत्मा यजमानो बुद्धिः पत्नी वेदा महर्त्विजः प्राणो ब्राह्मणो रव
स्यपानः प्रतिस्थाता व्यानः प्रस्तोता समानो मैत्रावरुण उदान उद्गाता हंकारोध्व
र्युर्होता वित्तशरीरं वेदिर्नासिकोत्तरवेदिर्मूर्धा द्रोणकलशो दक्षिणो हस्तः स्रु
वः सव्यहस्त आज्यस्थाली श्रोत्रे आघारौ चक्षुषी आज्यभागौ ग्रीवा धारा
पोता तन्मात्राणि सदस्या महाभूतानि प्रयाजा भूतानि अनुयाजा जिह्वा दंतो

क्रोधस्त्वाकस्तालुः शंयोवाक्ः स्मृतिर्दया क्षांतिरहिंसापत्नीसंयाजा ॐकारो यूप आशा
रशना मनोरथः कामः पशुः केशाद्दर्भा बुद्धीन्द्रियाणि यज्ञपात्राणि कर्मेन्द्रियाणि ह
वींषि अहिंसा इष्टयस्त्यागो दक्षिणा अवभृथं मरणं सर्वा ह्यस्मिन्देवताः शरीरेधिसमा
हिताः वाराणस्यां मृतो वापि ह्येदं ब्रह्म यदा पठेत् एकेन जन्मना जंतुर्मोक्षं मोक्षं
च प्राप्नुयात् इति ४॥ इत्यथर्ववेदे प्राणाग्निहोत्रोपनिषत्समाप्तैकादशी ११ ॐ ॐ ॐ
मित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चा
न्यत् त्रिकालातीतं तदप्योंकार एव सर्वं ह्येतद्ब्रह्मायमात्मा ब्रह्म सोयमात्मा चतुष्पाज्जा
गरितस्थानो बहिःप्रज्ञः सप्तांग एकोनविंशतिमुखः स्थूलभुग्वैश्वानरः प्रथमः
पादः स्वप्नस्थानोन्तःप्रज्ञः सप्तांग एकोनविंशतिमुखः प्रविविक्तभुक्तैजसो हिरण्य

गर्भो द्वितीयः पादो यत्र सुप्तो न कंचन कामं कामयते न स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान
एकीभूतः प्रज्ञानघन एवानंदमयो ह्यानंदभुक्चेतोमुखः प्राज्ञस्तृतीयपाद एष
सर्वेश्वर एष सर्वज्ञ एषोंतर्याम्येष योनिः सर्वस्य प्रभवाप्ययौ हि भूतानामत्रैते
श्लोकाभवंति १ बहिःप्रज्ञो विभुर्विश्वो ह्यंतःप्रज्ञस्तु तैजसः घनप्रज्ञस्तथा प्रा
ज्ञ एक एव त्रिधा स्थितः दक्षिणाक्षिमुखे विश्वो मनस्यंतस्तु तैजसः आकाशश्च
हृदि प्राज्ञस्त्रिधा देहे व्यवस्थितः विश्वो हि स्थूलभुङ्नित्यं तैजसः प्रविविक्तभु
क् आनंदभुक्तथा प्राज्ञस्त्रिधा भोगं निबोधयत स्थूलं तर्पयते विश्वं प्रविवि
क्तं च तैजसं आनंदं च तथा प्राज्ञं त्रिधा तृप्तिं विजानत त्रिषु धामसु यद्भो
ज्यं भोक्ता यश्च प्रकीर्त्तितः वेदैतदुभयं यस्तु स भुंजानो न लिप्यते प्रभवः ३२

सर्वभावानांसत्तामितिविनिश्चयः सर्वंजनयतेप्राणश्चेतोंशून्पुरुषःपृथक् विभूतिं
प्रसवंत्वन्येमन्यंतेसृष्टिचिंतकाः स्वप्नमायास्वरूपेतिसृष्टिरन्यैर्विकल्पिता इच्छामा
त्रंप्रभोःसृष्टिरितिसृष्टौविनिश्चिता कालात्प्रसूतिंभूतानांमन्यंतेकालचिंत
काः भोगार्थंसृष्टिरित्यन्येक्रीडार्थमितिचापरे देवस्यैषस्वभावोयमाप्तकाम
स्यकास्पृहा नबहिःप्रज्ञंनांतःप्रज्ञंनोभयतःप्रज्ञंनप्रज्ञंनाप्रज्ञंनप्रज्ञानघन
मदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिंत्यमव्यपदेश्यमेकात्मप्रत्ययसारंप्रपं
चोपशमंशिवमद्वैतंचतुर्थंमन्यंतेसआत्मासविज्ञेयो त्रैतेश्लोकाभवंति २ प्र
ज्ञानांप्रसृतानैः स्थिरचरनिकरव्यापिभिर्व्याप्यलोकान्भुक्त्वाभोगान्स्थविष्ठान्
पुनरपिधिषणोद्भासितान्कामजन्यान् पीत्वासर्वान्विशेषान्स्वपितिम

३४
३५

धुरन्युक्तमायया मोहयन्तो मायासंख्यां तुरीयं परममृतमजं ब्रह्म यत्तत्त्वतोस्मि यो
विश्वात्मा विविध विषयान्प्राप्य भोगान्स्थविष्ठान्पश्चात्तस्यास्यान्स्वमतिविभवान्
ज्योतिषा स्वेन सूक्ष्मान् सर्वानेतान्पुनरपि शनैः स्वात्मनि स्थापयित्वा हित्वा स
र्वान्विशेषान्विगतगुणगण[illegible]णः पात्वसौ नस्तुरीयः कार्यकारणबद्धौ ताविष्येते विश्व
तैजसौ प्राज्ञः कारणबद्धस्तु द्वौ तौ तुर्ये न सिध्यतः नात्मानं न परांश्चैव न सत्यं नापि चा
नृतं प्राज्ञः किंचन संवेत्ति तुर्यं तत्सर्वदृक्सदा २ निवृत्तेः सर्वदुःखानामी
शानः प्रभुरव्ययः अद्वैतः सर्वभावानां देवस्तुर्यो विभुः स्मृतः द्वैतस्याग्रहणं तु
ल्यमुभयोः प्राज्ञतुर्ययोः बीजनिद्रायुतः प्राज्ञः स च तुर्ये न विद्यते स्वप्ननिद्रा
युतावाद्यौ प्राज्ञस्त्वस्वप्ननिद्रया न निद्रां नैव च स्वप्नं तुर्ये पश्यन्ति निश्चिताः॥

३४

अन्यथागृह्णतःस्वप्नेनिद्रातत्वमजानतः विपर्यासेतयोःक्षीणेतुरीयंपदमश्नुते अ
नादिमाययासुप्तोयदाजीवःप्रबुध्यते अजमनिद्रमस्वप्नमद्वैतंबुध्यतेतदा प्रपंचोय
दिविद्येतनिवर्त्तेतनसंशयः मायामात्रमिदंद्वैतमद्वैतंपरमार्थतः विकल्पोविनिव
र्त्तेतकल्पितोयदिकेनचित् उपदेशादयंवादोज्ञातेद्वैतंनविद्यते ४ सोयमात्माध्यक्ष
रमोंकारस्त्रिमात्रंपादामात्राश्चपादाअकारउकारोमकारश्चेति जागरितस्थानोवै
श्वानरोकारःप्रथमामात्राप्तेरादिमत्वाद्वाप्नोतिहवैसर्वान्कामानादिश्चभवति
यएवंवेदस्वप्नस्थानस्तैजसउकारोद्वितीयामात्रोत्कर्षादुभयत्वाद्वोत्कर्षतिहवै
ज्ञानसंततिंसमानश्चभवतिनास्याब्रह्मवित्कुलेभवति यएवंवेदसुषुप्तस्था
नःप्राज्ञोमकारस्तृतीयामात्रामितेरपीतेर्वामिनोतिहवाइदंसर्वमपीतिश्च

३५

भवतियएवंवेदतद्वैतेस्लोकाभवंति ५ विश्वात्मनोविवक्षायामादिसामान्यमुत्कटं
मात्रासंप्रतिपत्तौस्यादाप्तिसामान्यमेवच तेजसस्यत्वविज्ञातउत्कर्षोदृश्यतेस्फुटं॥
मात्रासंप्रतिपत्तौस्याद [illegible] मयत्वंतथाविधिं मकारभावेःप्राज्ञस्यमान
सामान्यमुत्कटं मात्रोसंप्रतिपत्तौतुलयसामान्यमेवच त्रिषुधामसुयत्तुल्यंसामान्यं
वेतिनिश्चितः सपूज्यःसर्वभूतानांवंद्यश्चैवमहामुनिः अकारोनयतेविश्वमुका
रश्चापितैजसं मकारश्चपुनःप्राज्ञंनामात्रेविद्यतेगतिः ६ अमात्रश्चतुर्थोव्यव
हार्यःप्रपंचोपशमःशिवः शिवमद्वैतंएवमोंकारआत्मेवसंविशत्यात्मनात्मानं
यएवंवेदतद्वैतेस्लोकाभवंति ॐकारपादशोविद्यात्पादमात्रान्नसंशयः उ
कारंपादशोज्ञात्वानकिंचिदपिचिंतयेत् युंजीतप्रणवेचेतःप्रणवाब्रह्मनिर्भयं॥

३५

प्रणवे नित्ययुक्तस्य न भयं विद्यते क्वचित प्रणवो ह्यपरं ब्रह्म प्रणवश्च परः स्मृतः अ
पूर्वोनंतरो बाह्यो नपरः प्रणवोव्ययः सर्वस्य प्रणवो ह्यादिर्मध्यमंतस्तथैव च एवं
हि प्रणवं ज्ञात्वा व्यश्नुते तदनंतरं प्रणवं हीश्वरं विद्यात्सर्वस्य हृदये स्थितं सर्व
व्यापिनमोंकारं मत्वा धीरो न शोचति अमात्रोनंतमात्रश्च द्वैतस्योपशमः शिवः।
ओंकारो विदितो येन स मुनिर्नेतरो जनः स मुनिर्नेतरो जन इति ७ इत्यथर्व
वेदे मंडूक्योपनिषत्समाप्ता द्वादशी॥१२॥ प्रथमं प्रकरणं समाप्तं १ ओं वैतथ्यं सर्व
भूतानां स्वप्न आहुर्मनीषिणः अंतस्थानां तु भेदानां संवृतत्वेन हेतुना अ
दीर्घत्वाच्च कालस्य गत्वा देशान्न पश्यति प्रतिबुद्धश्च वै सर्वस्तस्मिन्देशे न वि
द्यते अभावश्च रथादीनां श्रूयते न्यायपूर्वकं वैतथ्यं तेन संप्राप्तं स्वप्न आहुः

३६
36

प्रकाशितं १ अंतस्थानांतु भेदानां तथा जागरिते स्मृतं यथा तत्र तथा स्वप्ने संवृतत्वे
न भिद्यते स्वप्नजागरितस्थाने ह्येकमाहुर्मनीषिणः भेदानां हि समत्वेन प्रसिद्धेनै
व हेतुना आदावंते च यन्नास्ति वर्त्तमानेपि तत्तथा वितथैः सदृशाः संतोऽवितथा इव
लक्षिताः सप्रयोजनता तेषां स्वप्ने विप्रतिपद्यते तस्मादाद्यंतवत्त्वेन मिथ्यैव खलु
ते स्मृताः अपूर्वं स्थानिधर्मो हि यथा स्वर्गनिवासिनां तानयं प्रेक्षते गत्वा यथैव
हि सुशिक्षितः स्वप्नवृत्तावप्यंतश्चेतसा कल्पितं तदिदमसत् बहिश्चेतसा गृही
तं हि सदसतोर्वैतथ्यं युक्तम् जाग्रद्वृत्तावप्यंतश्चेतसा कल्पितं तदिदमसत् ब
हिश्चेतसा गृहीतं हि सदसतोर्वैतथ्यं दृष्टं उभयोरपि वैतथ्यं भेदानां स्थान
योर्यदि क एतान्बुध्यते भेदान्को वै तेषां विकल्पकः कल्पयत्यात्मनात्मानमात्मा

३६

देवः स्वमायया स एव बुध्यते भेदानिति वेदान्तनिश्चयः विकरोत्यपरान्भावानन्तश्चित्ते व्यव
स्थितान् नियतांश्च बहिश्चित्त एवं कल्पयते प्रभुः चित्तकाला हि येन्तस्तु द्वयकालाश्च ये
बहिः कल्पिता एव ते सर्वे विशेषो नान्यहेतुकः अव्यक्ता एव येन्तस्तु स्फुटा एव च ये ब
हिः कल्पिता एव ते सर्वे विशेषस्त्विंद्रियांतरे २ जीवं कल्पयते पूर्वं ततो भावान्पृथ
ग्विधान् बाह्यानाध्यात्मिकांश्चैव यथा विद्यातथा स्मृतिः अनिश्चिता यथा रज्जुरंध
कारे विकल्पिता सर्पधारादिभिर्भावैस्तद्वदात्मा विकल्पितः निश्चितायां यथा र
ज्ज्वां विकल्पो विनिवर्तते रज्जुरेवेति चाद्वैतं तद्वदात्मविनिश्चयः प्राणादिभिरनं
तैस्तु भावैरेभिर्विकल्पितः मायैषा तस्य देवस्य यया संमोहितः स्वयं ३ प्राण इति
प्राणविदो भूतानीति च तद्विदः गुणा इति गुणविदस्तत्वानीति च तद्विदः पादा

३८

37

इतिपादविदो विषयाइतितद्विदः लोकाइतिलोकविदो देवाइतिचतद्विदः वेदाइतिवे
दविदोयज्ञाइतिचतद्विदः भोक्तेतिचभोक्तृविदोभोज्यमितिचतद्विदः सूक्ष्माइति
सूक्ष्मविदःस्थूलइतिचतद्विदः मूर्त्तइतिमूर्त्तविदोमूर्त्तइतिचतद्विदः कालइति
कालविदोदेशाइतिचतद्विदः वादइतिवादविदोभुवनानीतिचतद्विदः मनइतिम
नोविदोबुद्धिरितिचतद्विदः चित्तमितिचित्तविदोधर्मोधर्मेचतद्विदः पंचविंश
कइत्येकेषड्विंशइतिचापरे पंचविंशकइत्याहुरनंतइतिचापरे लोकाँल्लोकवि
दःप्राहुराश्रमइतिचतद्विदः स्त्रीपुन्नपुंसकंलिंगंपरापरमथापरे ४ सृष्टि
रितिसृष्टिविदोलयइतिचतद्विदः स्थितिरितिस्थितिविदोसर्वेचेहतुतद्विदः
॥यंभावंदर्शयेद्यस्यतंभावंसतुपश्यति तेचावतिसमूत्वासोतद्ग्रहःसमुपैतिते॥

३८

एतैरेषपृथग्भावैः पृथगेवोपलक्षितः एवंयोवेदतत्त्वेनकल्पयेत्सोविशंकितः स्वप्न
मायेयथादृष्टेगंधर्वनगरंयथा तथाविश्वमिदंदृष्टंवेदांतेषुविचक्षणैः तद्वत्स्वप्नमि
दंदृष्टंव [illegible] विबुद्धसंनिभं नाशप्राप्यंसुखाधीनंनाशोत्तरमभावनं
ननिरोधोनचोत्पत्तिर्नबद्धोनचसाधकः नमुमुक्षुर्नवैमुक्तइत्येषापरमार्थता भा
वैरसद्भिरेवायमद्वयेनचकल्पितः भावाअप्यद्वयेनैवतस्मादद्वयताशिवा नात्मभावेन
नानेदंनस्वेनापिकथंचन नपृथङ्नापृथक्किंचिदितितत्त्वविदोविदुः वीतरागभयक्रो
धैर्मुनिभिर्वेदपारगैः निर्विकल्पोह्ययंदृष्टःप्रपंचोपशमोद्वयः तस्मादेवंविदित्वै
नमद्वैतेयोजयेत्स्मृतिं अद्वैतंसमनुप्राप्यजडवल्लोकमाचरेत् निःस्तुतिर्नि
र्नमस्कारोनिःस्वधाकारएवच चलाचलनिकेतश्चयतिर्यादृच्छिकोभवेत् ॥

तत्वमाध्यात्मिकं दृष्ट्वा तत्वं दृष्ट्वा तु बाह्यतः तत्वीभूतस्तदारामस्तत्वादप्रच्युतो भवेत् त
त्वादप्रच्युतो भवति॥ इत्यथर्ववेदे द्वितीयं वैतथ्याख्यं प्रकरणोपनिषत्समाप्ता त्रयोदशा
१२ ॐ उपासनाश्रितो धर्मो जाते ब्रह्मणि वर्त्तते प्रागुत्पत्तेरजं सर्वं तेनासौ कृपणः
स्मृतः अतो वक्ष्याम्यकार्पण्यमजाति समतां यथा यथा न जायते किंचिज्जा
यमानं समंततः आत्मा ह्याकाशवज्जीवैर्घटाकाशैरिवोदितः घटादिवच्च सं
घाते जातावेतन्निदर्शनं घटादिषु प्रलीनेषु घटाकाशादयो यथा आका
शे संप्रयुज्यंते तद्वज्जीवा इहात्मनि यथैकस्मिन्घटाकाशे रजोधूमादि
भिर्युते न सर्वे संप्रयुज्यंते तद्वज्जीवाः सुखादिभिः रूपकार्यसमाख्याश्च
भिद्यंते तत्र तत्र वै आकाशस्य न भेदोस्ति तद्वज्जीवेषु निर्णयः नाकाशस्य

घटाकाशो विकारावयवौ यथा नैवात्मनः सदा जीवो विकारावयवौ तथा यथा भवति बा
लानां गगनं मलिनं मलैः तथा भवत्यबुद्धानामात्मापि मलिनो मलैः मरणसंभवे चै
व गत्यागमनयोरपि स्थितौ सर्वशरीरेष्वाकाशेनाविलक्षणः संघाताः स्वप्नवत्सर्वे
आत्ममायाविवर्जिताः आधिक्ये सर्वसाम्ये वा नोपपत्तिर्हि विद्यते १० रसादयो
हि ये कोशा व्याख्यातास्तैत्तिरीयके तेषामात्मा परो जीवः खं यथा संप्रकीर्तितः द्वयो
द्वयोरनुज्ञाते परं ब्रह्म प्रकाशितं पृथिव्यामुदरे चैव यथाकाशः प्रकाशितः जीवा
त्मनोरनन्यत्वमभेदेन प्रशस्यते नानात्वं निंद्यते यच्च तदेव हि समंजसं जीवात्मनोः
पृथक्त्वं यत्प्रागुत्पत्तेः प्रकाशितं भविष्यद्वृत्त्या गौणं तन्मुख्यत्वं हि न युज्यते मृल्लो
हविस्फुलिंगैः सृष्टिर्या चोदितान्यथा उपायः सोवताराय नास्ति भेदः कथंचन॥

३९

39

आश्रमास्त्रिविधाहीनमध्यमोत्कृष्टदृष्टयः उपासनोपदिष्टेयं तदर्थमनुकंपया स्वसिद्धां
तव्यवस्थासु द्वैतिनो निश्चिता दृढं परस्परं विरुध्यंते तैरयं न विरुध्यते अद्वैतं पर
मार्थो हि द्वैतं तद्भेद उच्यते तेषामुभयता द्वैतं तेनायं न विरुध्यते मायया भिद्य
ते ह्येतन्नान्यथायं कथंचन तत्वतो भिद्यमाने हि मर्त्यताममृतं व्रजेत् अजातस्यै
व भावस्य जातिमिच्छंति वादिनः अजातो ह्यमृतो भावो मर्त्यतां कथमेष्यति २ नभ
वत्यमृतं मर्त्यं न मर्त्यममृतं तथा प्रकृतेरन्यथाभावो न कथंचिद्भविष्यति स्वभावे
नामृतो यस्य भावो गच्छति मर्त्यतां कृतकेनामृतस्तस्य कथं स्थास्यति निश्चलः भू
ततोऽभूततो वापि सृज्यमाने समा श्रुतिः निश्चितं युक्तियुक्तं च यत्तद्भवति नेत
रत् नेह नानेति चाम्नायादिंद्रो मायाभिरित्यपि अजायमानो बहुधा मायया

३९

जायते तु सः संभूतेरपवादाच्च संभवः प्रतिषिध्यते कस्त्वेनं जनयेदिति कारणं प्रति
षिध्यते २ स एष नेति नेतीति व्याख्यातं निह्नुते यतः सर्वमग्राह्यभावेन हेतुनाजं
प्रकाशते सतो हि मायया जन्म युज्यते न तु तत्त्वतः तत्त्वतो जायते यस्य जातं तस्य हि
जायते असतो मायया जन्म तत्त्वतो नैव युज्यते वंध्यासुतो न तत्त्वेन मायया वापि जा
यते यथा स्वप्ने द्वयाभासं स्पंदते मायया मनः तथा जाग्रद्द्वयाभासं स्पंदते मायया
मनः अद्वयं च द्वयाभासं मनः स्वप्ने न संशयः अद्वयं च द्वयाभासं तथा जाग्रन्न सं
शयः मनोदृश्यमिदं द्वैतं यत्किंचित्सचराचरं मनसो ह्यमनीभावे द्वैतं नैवो
पलभ्यते आत्मसत्यानुबोधेन न संकल्पयते तदा अमनस्तां तदा याति ग्राह्या
भावे तदग्रहं ५ अकल्पकमजं ज्ञानं ज्ञेयाभिन्नं प्रचक्षते ब्रह्म ज्ञेयमजं नित्य

४०

मजेनाजं विबुध्यते निगृहीतस्य मनसो निर्विकल्पस्य धीमतः प्रचारः स तु विज्ञेयः
सुषुप्तेऽन्यो न तत्समः लीयते हि सुषुप्तेन निगृहीतं न लीयते तदेव निर्भयं ब्र
ह्म ज्ञानालोकं समंततः अजमनिद्रमस्वप्नमनामकमरूपकं सकृद्विभातं
सर्वज्ञं नोपचारः कथंचन सर्वाभिमानविगतः सर्वचिंतासमन्वितः॥
सुप्रशांतः सकृज्ज्योतिः समाधिरचलोऽभयः ग्रहं न तत्र नोत्सर्गश्चिंता यत्र
न विद्यते आत्मसंस्थं तदा ज्ञानमजाति समतां गतं अस्पर्शयोगो नामायं
दुर्दर्शः सर्वयोगिभिः योगिभिर्भिद्यते यस्मादभये भयदर्शिनः ६ म
नसो निग्रहायत्तमभयं सर्वयोगिनां दुःखक्षयप्रबोधश्चाप्यक्षया शांतिरेव
च उत्सेक उदधेर्यद्वत्कुशाग्रेणैकबिंदुना मनसो निग्रहस्तद्वद्भवेदपरि

४०

वेदतः उपायेननिगृह्णीयाद्विक्षिप्तंकामभोगयोः सुप्रसन्नंलयेचैवयथाकामलय
स्तथा दुःखंसर्वमनुस्मृत्यकामभोगान्निवर्त्तयेत् अजंसर्वमनुस्मृत्यजातंनैवतु
पश्यति लयेसंबोधयेच्चित्तंविक्षिप्तंशमयेत्पुनः सकषायंविजानीयात्समप्राप्तं
नचालयेत् ७ नास्वादयेत्सुखंतत्रनिःसंगःप्रज्ञयाभवेत् निश्चलंनिश्चरच्चित्त
मेकीकुर्यात्प्रयत्नतः यदानलीयतेचित्तंनचविक्षिप्यतेपुनः अनिंगनमनाभा
संनिष्पन्नंब्रह्मतत्तदा स्वस्थंशांतमनिर्वाणमकथ्यंसुखमुत्तमं अजमजेनज्ञे
येनसर्वज्ञंपरिचक्षते नकश्चिज्जायतेजीवः संभवोस्यनविद्यते एतत्तदुत्तमं
सत्यंयत्रकिंचिन्नजायते ८ यत्रकिंचिन्नजायतइति ८ इत्युपदेशात्रयंआ
त्मप्रकरणंतृतीयंचतुर्दशोपनिषत्समाप्ता ॥ १४ ॥ ज्ञानेनाकाशकल्पेनध

र्मान्नयोगगनोपमा २ स्रेयाभिन्नेन संबुद्धः तं वंदे द्विपदांपरं अस्पर्शयोगो वैना
म सर्वसत्त्वसुखोहितः अविवादोविरुद्धश्च देशितस्तंनमाम्यहं भूतस्यजाति
मिछंतिवादिनः केचिदेवहि अभूतस्यापराधीरा विवदंतः परस्परं भूतंनजाय
ते किंचिदभूतंनैवजायते विविदंतो द्वयाह्येवमजातिंख्यापयंतिते ख्याप्य
मानामजातिं तैरनुमोदामहेवयं विद्वद्भासन्नते: सार्द्धमविवादं निबोधत:॥
प्रथम: ख० ३: २ अजातस्यैवधर्मस्य जातिमिछंतिवादिन: अजातोह्यमृतोध
र्मोमर्त्यतांकथमेष्यति नभवत्यमृतंमर्त्यं नमर्त्यममृतं यथा प्रकृतेरन्यथा
भावोनकथंचिद्भविष्यति स्वभावेनामृतो यस्य धर्मो गच्छतिमर्त्यतां
कृतकेनमृतस्तस्य कथं स्थास्यति निश्चल: सांसिद्धिकी स्वाभाविकी

सहजाह्यकृताचया प्रकृतिश्चेतिविज्ञेयास्वभावंनजहातिया जरामरणनिर्मुक्ताःसर्वे
धर्माःस्वभावतः जरामरणमिछंतश्च्यवंतेतन्मनीषया २ कारणंयस्यवैकार्यंकार
णंतस्यजायते जायमानंकथमजंभिन्नंनित्यंकथंचतत् कारणाद्यद्यनन्यत्वमतःका
र्यमजंयदि जायमानाद्धिवैकार्यात्कारणंतेकथंध्रुवं अजाद्वैजायतेयस्यदृष्टांतस्त
स्यनास्तिवै जाताश्चजायमानस्यनव्यवस्थाप्रसज्यते हेतोरादिफलंयेषांमादिर्हेतोः
फलंचतत् तथाजन्मभवेत्तेषांपुत्रजन्मपितुर्यथा २ संभवेहेतुफलयोरेशितव्यःक्र
मस्त्वया युगपत्संभवेयस्मादसंबोधविषाणवत् फलादुत्पद्यमानःसन्नतेहेतुः
प्रसिध्यति अप्रसिद्धःकथंहेतुःफलमुत्पादयिष्यति यदिहेतोःफलात्सिद्धिःफल
सिद्धिश्चहेतुतः करतरत्पूर्वनिष्पन्नंयस्यसिद्धिरपेक्षया अशक्तिरपविज्ञानं

क्रमकोपोथवापुनः एवंहिसर्वथाबुद्धे रजातपरदीपिता बीजांकुराख्योदृष्टांतः सदासा

ध्यसमोहितः नचसाध्यसमोहेतुः सिद्धोसाध्यस्ययुज्यते पूर्वापरपरिज्ञानसजातेः
परिदीपकं जायमानाद्धिवैधर्मात्कथंपूर्वीनगृह्यते स्ततोवापरतोवापिनकिंचिद्वस्तु
जायते सदसत्सदसद्वापिनकिंचिद्वस्तुजायते हेतुर्नजायतेनादेः फलंचापिस्वभाव
तः आदिर्नविद्यतेयस्यतस्यह्यादिर्निवर्त्तते प्रज्ञप्तेः संनिमित्तत्वमन्यथाद्वयनाशतः
॥संक्लेशस्योपलब्धेश्चपरतंत्रास्तितामता प्रज्ञप्तेः संनिमित्तत्वमिष्यतेयुक्तिदर्शना
त् निमित्तस्यानिमित्तत्वमिष्यतेभूतदर्शनात् ५ चित्तंनसंस्पृशत्यर्थंनार्थाभा
संतथैवच अभूतोहियतश्चार्थोनार्थाभासस्ततःपृथक् निमित्तंनसदाचित्तंसं
स्पृशत्यध्वसुत्रिषु अनिमित्तोविपर्यासः कथंतस्यभविष्यति तस्मान्नजायते

चित्तं चित्तदृश्यं नजायते तस्यपश्यंतियेजातिं खेवैपश्यंतितेपदं अजातिंजायतेयस्मा
दजातिःप्रकृतिस्तथा प्रकृतेरन्यथाभावोनकथंचिद्भविष्यति अनादेरंतवत्वंचसंसा
रस्यनसेत्स्यति अनंतताचादिमतोमोक्षस्यनभविष्यति ६ आदावंतेचयन्नास्तिव
र्तमानेपितत्तथा वितथैःसदृशाःसंतोवितथाइवलक्षिताः सप्रयोजनतातेषांस्वप्ने
विप्रतिपद्यते तस्मादाद्यंतवत्त्वेनमिथ्यैवखलुतेस्मृताः सर्वेधर्मामृषास्वप्नेकाय
स्यांतर्निदर्शनात् संवृतेस्मिन्प्रदेशेवैभूतानांदर्शनंकुतः नयुक्तंदर्शनंगत्वा
कालस्यानियमाद्गतौ प्रतिबुद्धश्चवैसर्वस्तस्मिन्देशेनविद्यते मित्राद्यैःसहसं
मंत्र्यप्रबुद्धोनप्रपद्यते गृहीतंचापियत्किंचित्प्रतिबुद्धोनपश्यति स्वप्नेचाव
स्तुकःकायःपृथगन्यस्यदर्शनात् यथाकायस्तथासर्वंचित्तदृश्यमवस्तुकं

४२

ग्रहणाज्जागरितवत्तद्धेतुः स्वप्न इष्यते तद्धेतुत्वात्तु तस्यैव सज्जागरितमिष्यते उ
त्पादस्याप्रसिद्धत्वादजं सर्वमुदाहृतं न च भूतादभूतस्य संभवोऽस्ति कथंचन अ
सज्जागरिते दृष्ट्वा स्वप्ने पश्यति तन्मयः असत्स्वप्नेऽपि दृष्ट्वा च प्रतिबुद्धो न पश्य
ति नास्ति सद्धेतुकमसत्सदसद्धेतुकं तथा सच्च सद्धेतुकं नास्ति सद्धेतुकमस
त्कुतः ८ विपर्यासाद्यथा जाग्रदचिन्त्यान्भूतवत्स्पृशेत् तथा स्वप्ने विपर्यासाद्धर्मां
स्तत्रैव पश्यति उपलंभात्समाचारादस्ति वस्तुत्ववादिनां जातिस्तु देशिता बुद्धै
रजातेस्त्रस्यतां तदा अजातेस्त्रस्यतां तेषामुपलंभाद्वियंति ये जातिदोषा न से
त्स्यंति दोषोऽप्यल्पो भविष्यति उपलंभात्समाचारान्मायाहस्ती यथोच्यते उपलं
भात्समाचारादस्ति वस्तु तथोच्यते जात्याभासं चलाभासं वस्त्वाभासं तथै

४२

जा१

वच अत्राचलमस्तुत्वं विज्ञाने शांतिमद्वयं एवं न जायते चित्तमेवं धर्मा अजाः
स्मृताः एवमेव विजानंतो न तपंति विपर्यये ऋजुवक्रादिकाभासमलातस्पंदितं
यथा ग्रहणग्राहकाभासं विज्ञानस्पंदितं तथा अस्पंदमानमलातमनाभासमजं य
था अस्पंदमानं विज्ञानमनाभासमजं तथा अलाते स्पंदमाने वै नाभासा अन्य
तोभुवः न ततोन्यत्र निस्पंदान्नलातं प्रविशंति ते न निर्गता अलातात्ते द्रव्यत्वाभाव
योगतः विज्ञानेपि तथैवाःस्युराभासस्य विशेषतः ५० विज्ञाने स्पंदमाने वै नाभा
सा अन्यतोभुवः न ततोन्यत्र निस्पंदान्न विज्ञानं विशंति ते न निर्गतास्ते विज्ञा
नाद्द्रव्यत्वाभावयोगतः कार्यकारणतायोगाद्यतो चित्ताः सदैव हि द्रव्यं द्रव्यस्य
हेतुः स्यादन्यदन्यस्य चैव हि द्रव्यत्वमन्यभावो वा धर्माणां नोपपद्यते एवं न

तावद्धेतुफलोद्भवः २

४५

चित्तजा धर्माः चित्तं वापि न धर्मजं एवं हेतुफलाजातिं प्रविशंति मनीषिणः यावद्धेतु
फलावेशः [illegible] क्षीणे हेतुफलावेशे नास्ति हेतुफलोद्भवः यावद्धेतुफ
लावेशः संसारस्तावदायतः क्षीणे हेतुफलावेशे संसारं नोपपद्यते संवृत्या जायते
सर्वं शाश्वतं तेन नास्ति वै सद्भावेन ह्यजं सर्वमुच्छेदस्तेन नास्ति वै धर्मा य इति जायंते
जायंते ते न तत्वतः जन्म मायोपमं तेषां सा च माया न विद्यते यथा मायामयाद्बी
जात् जायते तन्मयोंकुरः न स नित्यो न वोच्छेदी तद्वद्धर्मेषु योजना नाजेषु सर्वध
र्मेषु शाश्वताशाश्वताभिधा यत्र वर्णा न वर्तंते विवेकस्तत्र नोच्यते यथा स्वप्ने द्व
याभासं चित्तं चलति मायया तथा जाग्रद्द्वयाभासं चित्तं चलति मायया ६२ अद्वयं
च द्वयाभासं मनः स्वप्ने न संशयः अद्वयं च द्वयाभासं तथा जाग्रन्न संशयः ॥ स्वप्न

४४

दृक्प्र चलति स्वप्ने दिक्षु वै दशसु स्थितान् अंडजाः स्वेदजाश्चापि जीवान्पश्यति यान्सदा
स्वप्नदृक्चित्तदृश्यास्ते न विद्यंते ततः पृथक् तथा तद्दृश्यमेवेदं स्वप्नदृक्चित्तमिष्यते चर
जागरिते जाग्रद्दिक्षु वै दशसु स्थिता २ अंडजाः स्वेदजाश्चापि जीवान्पश्यति यान्सदा
९२ जाग्रच्चित्तेक्षणीयास्ते न विद्यंते ततः पृथक् तथा तद्दृश्यमेवेदं जाग्रतश्चित्तमि
ष्यते उभे ह्यन्योन्यदृश्ये ते किं तदस्तीति चोच्यते लक्षणाशून्यमुभयं तन्मतेनैव गृह्य
ते यथा स्वप्नमयो जीवो जायते म्रियतेपि च॥ तथा जीवा अमी सर्वे भवंति न भवंति च
यथा मायामयो जीवो जायते म्रियतेपि च तथा जीवा अमी सर्वे भवंति न भवंति च य
था निर्मितको जीवो जायते म्रियतेपि च तथा जीवा अमी सर्वे भवंति न भवंति च नक
श्चिज्जायते जीवः संभवोस्य न विद्यते ९ एतत्तदुत्तमं सत्यं यत्र किंचिन्न जायते चित्तस्पं

इति मेवेदंग्राह्यग्राहकवद्द्वयं चित्तं निर्विषयं नित्यमसंगं तेनकीर्त्तितं ७ योस्तिक
ल्पितसंवृत्यापरमार्थेन नास्त्यसौ परतंत्राभि संवृत्तः स्यान्नास्ति परमार्थतः अ
जः कल्पितसंवृत्यापरमार्थेननाप्यजः परतंत्राभि निष्पत्त्यासंवृत्याजायतेतुसः
अभूताभि निवेशोस्तिद्वयंतत्र नविद्यते द्वयाभावंसबुद्ध्वैव निर्निमित्तोनजायते य
दान लभतेहेतू नुत्तमाधममध्यमान् तदानजायते चित्तं हेत्वभावे फलं कुतः अ
निमित्तस्यचित्तस्ययानुत्पत्तिः समाद्वया अजातस्यैव सर्वस्यचित्तदृश्यंहि तद्यतः
१५ बुद्ध्वानिमित्ततांसत्यांहेतुंपृथगनाप्नुवन् वीतशोकं तथाकाममभयं पदमश्नुते
अभूताभि निवेशाद्धि सदृशे तत्प्र वर्त्तते वस्त्वभावंसबुद्ध्वैव निःसंगंविनिव
र्त्तते निवृत्तस्याप्रवृत्तस्यनिश्चलाहितदा स्थितिः विषयः स सं बुद्धानां तत्साम्यम

जमद्वयं अजमनिद्रमस्वप्नं प्रभातं भवति स्वयं सकृद्विभातो ह्येवैष धर्मो धातुः स्वभाव
तः सुखमाव्रियते नित्यं दुःखं विव्रियते सदा यस्य कस्य च धर्मस्य ग्रहेण भगवानसौ
अस्ति नास्त्यस्ति नास्तीति नास्ति नास्तीति वा पुनः चलस्थिरोभयाभावैरावृणोत्येव बा
लिशः कोट्यश्चतस्र एतास्तु ग्रहैर्यासां सदावृतः भगवानाभिरस्पृष्टो येन दृष्टः स सर्वदृक्
प्राप्य सर्वज्ञतां कृत्स्नां ब्राह्मण्यं पदमद्वयं अनापन्नादिमध्यांतं किमतः परमीहते विप्रा
णां विनयो ह्येष शमः प्राकृत उच्यते दमः प्रकृतिदांतत्वादेवं विद्वान् शमं व्रजेत् सवस्तु
सोपलंभं च द्वयं लौकिकमिष्यते अवस्तु सोपलंभं च शुद्धं लौकिकमिष्यते १६ अव
स्त्वनुपलंभं च लोकोत्तरमिति स्मृतं ज्ञानं ज्ञेयं च विज्ञेयं सदा बुद्धैः प्रकीर्तितं ज्ञाने च
त्रिविधे ज्ञेये क्रमेण विदिते स्वयं सर्वज्ञता हि सर्वत्र भवतीह महाधियः हेय

४६

४७

याप्यपाक्यानि विज्ञेयान्यग्रयाणतः तेषामन्यत्र विज्ञेयादुपलंभस्त्रिषुस्मृतः प्रकृत्याकाशव
त् ज्ञेयाः सर्वे धर्मा अनादयः विद्यते न हि नानात्वं तेषां क्वचन किंचन आदिबुद्धाः प्रकृत्यैव
सर्वे धर्माः सुनिश्चिताः यस्यैवं भवति क्षांतिः सोमृतत्वाय कल्पते ९७ आदिशांता ह्यनु
त्पन्नाः प्रकृत्यैव सुनिर्वृताः सर्वे धर्माः समाभिन्ना अजं शप्यामं विशारदं वैशारद्यं तु
वै नास्ति भेदे विचरतां सदा भेदवादाः पृथग्वादास्तस्मात्ते कृपणाः स्मृताः अजे शप्यामे
तु ये केचिद्भविष्यंति विपश्चिताः ते हि लोके महाज्ञानास्तच्च लोको न गाहते अजेष्वज
मसंक्रांतं धर्मेषु ज्ञानमिष्यते यतो न क्रमते ज्ञानमसंगं तेन कीर्तितं अणुमात्रेपि वै
धर्मे जायमाने विपश्चितः असंगता सदा नास्ति किमुतावरणच्युतिः ९८ अलब्धा
वरणाः सर्वे धर्माः प्रकृतिनिर्मलाः आदौ बुद्धास्तथा मुक्ता बुध्यंत इति नायकाः क

४६

मतेनहिबुद्धस्यज्ञानंधर्मेषुतायिनः सर्वेधर्मास्तथाज्ञानंनैतद्बुद्धेनभाषितं दुर्दर्शम
तिगंभीरमजंसाम्यंविशारदं बुद्ध्वापदमनानात्वंनमस्कुर्मोयथावलं नमस्कुर्मोयथा
वलमिति॥ इत्युपदेशग्रंथेअलातशांताख्यप्रकरणंसमाप्तं॥ अथर्ववेदेपंचदशोपनि
षत्समाप्ता॥ १५॥ ॐ अपश्यंत्वावरोहंतंदिवितःपृथिवीमयः अपश्यमपश्यंतंरुद्रंनी
लग्रीवंशिखंडिनं दिवि उग्रोत्तिवारूढात्पतिष्ठाभूम्यामधिजनास्तःपश्यतेमहत्
नीलग्रीवंविलोहितं एषएत्यवीरहारुद्रोजलाशभेषजीवित्तेक्षेममनीनशद्वातीी
कारोप्येतुतेनमस्तेभवभवायनमस्तेभवमन्यवेनमस्तेअस्तुबाहुभ्यामुतोत
इषवेनमः यामिषुंगिरिशंतहस्तेबिभर्ष्यस्तवेशिवं गिरित्रतं कृणु माहिंसीपुरु
षान्ममशिवेनवचसात्वागिरिशाच्छावदामसियथानः सर्वइमेजगदयक्ष्मं

४८

सुमनाअसत् यातइषुः शिवतमाशिवंबभूवतेधनुः शिवांशरव्यापातवतयानोमृड
जीवसेयातेरुद्र शिवातनूरघोरापापकाशिनी तयानस्तन्वाशंतमयागिरिशंत्वा
भिचकाशात् असौयस्ताम्रोअरुणउतबभ्रुविलोहितः येचेमेअभितोरुद्रादिक्षु
श्रिताः सहस्रशोवैषांहेडईमहे प्रथमःखंडः १ अदृश्यंचावरोहंतंनीलग्रीवंविलोहि
तं उतत्वागोपाअदृशन्नुतत्वोदहार्यः ॐ तोत्वाविश्वाभूतानितस्मैरुद्राय
तेनमः नमोस्तुनीलशिखंडायसहस्राक्षायवाजिने अथोयेअस्यसत्वानस्तेभ्यो
हमकुरंनमः नामांसितआयुधानांततायधृष्णवे उभाभ्यामकुरंनमोबाहुभ्यां
तवधन्वनेप्रमुंचधन्वनोस्तयोमुभयोरार्त्न्योर्ज्यायाश्चतेहस्तइषवः परातांभगवो
वप अवतत्यधनुस्त्वंसहस्राक्षशतेषुधीनिशीर्यशल्यानांमुखाशिवोनः

४८

शंभुराभुववविज्यंधनुः शिखंडुनो विशल्योवाणोवां उत अनेशानस्येषवः शिवोअस्य
निषंगतिः परितेधन्वनो हेतिरस्मान्वृणक्तु विश्वतः अथोयइषुधिस्तवारेअस्मिन्नि
धेहितं यातेहेतिर्मीढुष्टमहस्तेबभूवतेधनुः तयात्वंविश्वतोअस्मानयक्ष्मयाप
रिभुज नमोस्तुसर्पेभ्योयेकेचपृथिवीमनुयेअंतरिक्षेयेदिवितेभ्यःसर्पेभ्योनमः
येचामीरोचनेदिवियेचसूर्यस्यरश्मिषु येषामप्सुसदस्कृतंतेभ्यःसर्पेभ्योनमः यं
इषवोयातुधानानांयेवावनस्पतीनां येवावटेषुशेरतेतेभ्यःसर्पेभ्योनमः द्वितीय
खंडः २ पःस्वजनोनीलग्रीवोयः स्वजनोहरेरुत कल्माषपुच्छमोषधि
वीजंभयाश्चवरूंचति बभ्रुश्चबभ्रुकर्णश्चनीलगलमालःशिवः पश्यसर्वेनी
लशिखंडेनभवेनमरुतांपिता विरूपाक्षेणबभ्रूणांवाचंवदिष्यतोहतः सर्व

४८

नीलशिखंडेनवीरकर्मणिकर्मणि इमामस्यप्राशंजहियेनेदंविभजामहे नमोभवा
यनमः शर्वायनमः कुमारायशत्रवेनमोनीलशिखंडायनमः सभाप्रपादिने यस्यहरीअश्व
तरोगर्दभावभितस्करो तस्मैनीलशिखंडायनमः सभाप्रपादिनेनमः सभाप्रपादिनेइ
ति २ इत्यथर्ववेदेनीलरुद्रोपनिषत्समाप्ता ॥ ओंकारोदक्षिणःपक्ष उकारस्तूत्त
रः स्मृतः मकारस्त्वस्यपुच्छंवा अर्द्धमात्राशिरस्तथा पादौरजस्तमस्तस्यशरीरंसत्व
मुच्यते धर्मश्चदक्षिणंचक्षुरधर्मश्चोत्तरं स्मृतं भूर्लोकः पादयोस्तस्यभुवोलोकस्तु
जानुनोः स्वर्लोकः कटिदेशेतुनाभिदेशेमहोजगत् जनलोकस्तुहृदयेकंठदेशे
तपस्ततः भ्रुवोर्ललाटमध्येतुसत्यलोकोव्यवस्थितः सहस्राख्यमितिचात्रमंत्रए
वप्रकीर्तितः एवमेनंसमारूढंहंसयोगविचक्षणः नबध्यतेकर्मचारीपापकोटि

४८

प्रदर्शितः १

शोतेरपि आग्नेयी प्रथमा मात्रा वायव्येषा वशानुगा भानुमंडलसंकाशा भवन्मात्रा तथोत्त
रा परमा चार्द्धमात्रा च वारुणीं तां विदुर्बुधाः कालात्रयाननाप्येता सा मात्रा प्रतिष्ठिता
एष ॐकार आख्यातो धारणाभिर्निबोधत घोषिणी प्रथमा मात्रा विद्युन्माली तथापरा प
तंगी च तृतीया स्याच्चतुर्थी वायुवेगिनी पंचमी नामधेया च षष्ठी चैंद्री विधीयते सप्तमी वै
ष्णवी नाम शांकरी च तथाष्टमी नवमी महती नाम ध्रुवेति दशमी स्मृता एकादशी भवे
न्मौनी ब्राह्मी तिद्वादशी मता प्रथमायां तु मात्रायां यदि प्राणैर्वियुज्यते स राजा भार
ते वर्षे सार्वभौमः प्रजायते द्वितीयायां समुत्क्रांतो भवेद्यक्षो महात्मवान् विद्याधरस्तृ
तीयायां गंधर्वश्च चतुर्थिकां पंचम्यामथ मात्रायां यदि प्राणैर्वियुज्यते पन्नगो च प
तिं तथा नवम्यां च महर्लोकं दशम्यां च ध्रुवं व्रजेत् ×एकादश्यां तपोलोकं द्वादश्यां ब्रह्म

१ उषितः सह देवत्वं सोमलोके महीयते ॥ षष्ठ्यामिंद्रस्य सा सप्तम्यां वैष्णवं पदं ।

अष्टम्यां व्रजते रुद्र पशूनां च पतिं तथा ॥
नवम्यां च महर्लोकं दशम्यां च ध्रुवं व्रजेत् ॥

शाश्वतं ततःपरतरंशुद्धंव्यापकंनिष्कलंशिवं सदोदितंपरंब्रह्मज्योतिषामुदयोयतः अ
तीन्द्रियंगुणातीतंमनोलीनंयदाभवेत् अनौपम्यप्रभावंचयोगयुक्तःतदादिशेत् त
द्युक्तस्तन्मनाशक्तःशनैर्मुच्येत्कलेवरं स्वस्थितोयोगचारेणासर्वसंगविवर्जितः ततो
विलीनपाशोसोविमलःकेवलःप्रभुः तेनैवब्रह्मभावेनपरमानंदमश्नुते परमा
नंदमश्नुतइति १ इत्यथर्ववेदेनादबिंदूपनिषत्समाप्तासप्तदश १७ ॐमनोहि
द्विविधंप्रोक्तंशुद्धंचाशुद्धमेवच अशुद्धंकामवशगंशुद्धंकामविवर्जितं मनएव
मनुष्याणांकारणंबंधमोक्षयोः बंधायविषयासक्तंमुक्तंनिर्विषयंस्मृतं अतोनि
र्विषयस्यास्यमनसोमुक्तिरिष्यते तस्मान्निर्विषयंनित्यंमनःकार्य्यंमुमुक्षुणा॥
निरस्तविषयासंगंसन्निरुद्धंमनोहृदि यदायात्युन्मनीभावंतदातत्परमंपदं

तावदेवं निरोद्धव्यं यावद्धृदि गतं लयं एतत् ज्ञानं च ध्यानं च अतोन्यो ग्रंथविस्तरः नैवं
चिंत्यं न वा चिंत्यं अचिंत्यं चिंत्यमेव च पक्षपातविनिर्मुक्तं ब्रह्म संपद्यते तदा स्वरेण
साधयेद्योगमस्वरं भावयेत्परं अस्वरेणाहि भावेन भावेनाभाव इष्यते तदेव निष्क
लं ब्रह्म निर्विकल्पं निरंजनं तद्ब्रह्माहमिति ज्ञात्वा ब्रह्म संपद्यते ध्रुवं निर्विकल्प
मनंतं च हेतुदृष्टांतवर्जितं अप्रमेयमनाद्यं च ज्ञात्वा च परमं शिवं न निरोधो न चो
त्पत्तिर्न बंधो न च शासनं न मुमुक्षुर्न मुक्तिश्च इत्येषा परमार्थता एक एवात्मा मं
तव्यो जाग्रत्स्वप्नसुषुप्तिषु स्थानत्रयाद्व्यतीतस्य पुनर्जन्म न विद्यते एक एव हि
भूतात्मा भूते भूते व्यवस्थितः एकधा बहुधा चैव दृश्यते जलचंद्रवत् घटसंभृ
तमाकाशं लीयमाने घटे यथा घटो लीयेत नाकाशं तद्जीवो घटोपमः घटव

द्विविधाकारं भिद्यमानं पुनः पुनः तद्भग्नं न च जानाति स जानाति च नित्यशः ॥ शब्द
मायावृतो यावत्तावत्तिष्ठति पुष्करे भिन्ने तमसि चैकत्वमेकमेवानुपश्यति शब्दा
क्षरं परं ब्रह्म यस्मिन्क्षीणे यदक्षरं तद्विद्वानक्षरं ध्यायेद्यदीच्छेच्छांतिमाप्नुयात्
द्वे विद्ये वेदितव्ये तु शब्दब्रह्म परं च यत् शब्दब्रह्मणि निष्णातः परं ब्रह्माधिगच्छ
ति ग्रंथमभ्यस्य मेधावी ज्ञानविज्ञानतत्परः पलालमिव धान्यार्थी त्यजेद्ग्रंथम
शेषतः गवामनेकवर्णानां क्षीरस्याप्येकवर्णता क्षीरवत्पश्यते ज्ञानं लिंगिन
स्तु गवां यथा घृतमिव पयसि निगूढं भूते भूते च वसति विज्ञानं सततं मंथयित
व्यं मनसा मंथनभूतेन ज्ञाननेत्रं समादाय चरेद्वह्निमतः परं निष्कलं निर्मलं
शांतं तद्ब्रह्माहमिति स्मृतं सर्वभूताधिवासं च यद्भूतेष्ववन्याति सर्वान्

ग्राहकत्वेन तदस्म्यहं वासुदेवं तदस्म्यहं वासुदेव मिति २ इत्यथर्ववेदे ब्रह्मविंदूपनिषत्स
माप्तोष्टादश १८ ॐ शास्त्राण्यधीत्य मेधावी अभ्यस्य च पुनः पुनः परमं ब्रह्मविद्यायां उ
ल्काचत्तान्यथोत्सृजेत ॐकाररथमारुह्य विष्णुंकृत्वा तु सारथिं ब्रह्मलोकपदान्वेषी रु
द्राराधनतत्परः तावद्रथेन गंतव्यं यावद्रथपथिस्थितः स्थित्वा रथपथस्थानं रथमु
त्सृज्य गच्छति मात्रालिंगपदंत्यक्त्वा शब्दव्यंजनवर्जितं अस्वरेण मकारेण पदं सू
क्ष्मं च गच्छति शब्दादिविषयाः पंच मनश्चैवातिचंचलं चिंतयेदात्मनो रश्मी
न्प्रत्याहारः स उच्यते प्रत्याहारस्तथा ध्यानं प्राणायामोथ धारणा तर्कश्चैव समा
धिश्च षडंगो योग उच्यते यथा पर्वतधातूनां दह्यंते धमनान्मलाः तथेंद्रियकृता
दोषा दह्यंते प्राणनिग्रहात प्राणायामे द्वैहिद्दोषान्धारणाभिश्च किल्बिषं किल्बि

बहिःक्षयं नीत्वा सुचिरं चैव चिंतयेत् रुचिरे रेचकं चैव वायोराकर्षणं तथा प्राणायामास्त्रयः प्रोक्ता
रेचकपूरककुंभकाः सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह त्रिः पठेदायतप्राणः प्राणा
यामः स उच्यते उत्क्षिप्य वायुमाकाशं शून्यं कृत्वा निरात्मकं शून्यभावे प्रयुंजीयाद्रेचक
स्येति लक्षणं नोच्छ्वसेन्नानुच्छ्वसेन्नैव गात्राणि चालयेत् एवं वायुर्गृहीतव्यः पूरकस्येति
लक्षणं वक्त्रेणोत्पलनालेन वायुं कृत्वा निराश्रयं एवं वायुर्गृहीतव्यः कुंभकस्येति लक्षणं॥
अंधवत्पश्य रूपाणि शृणु शब्दमकर्णवत् काष्ठवत्पश्यते देहं प्रशांतस्येति लक्षणं मनः
संकल्पकं ज्ञात्वा संक्षिप्यात्मनि बुद्धिमान् धारयित्वा तथात्मानं धारणा परिकीर्तिता॥
आगमस्याविरोधेन ऊहनं तर्क उच्यते यं लब्ध्वाप्येवमन्येत समाधिः परिकीर्तितः॥१॥
भूमिभागे समे रम्ये सर्वदोषविवर्जिते कृत्वा मनोमयीं रक्षां जप्त्वा चैवाथ मंडलं॥ पद्मकं

स्वस्तिकं वापि भद्रासनमथापि वा बद्धा योगासनं सम्यगुत्तराभिमुखः स्थितः नासिकापुट
मङ्गुल्या पिधायैकेन मारुतं आकृष्य धारयेदग्निं शब्दमेवाभिचिंतयेत् ॐमित्येकाक्षरं
ब्रह्म ॐमित्येकेन रेचयेत् दिव्यमंत्रेणा बहुशः कुर्यादात्ममलच्युतिं पश्चाद्ध्यायेत पूर्वो
क्तं क्रमशो मंत्रं निर्दिशेत् स्थूलातिस्थूलमात्रायां नातिमूर्ध्वमतिक्रमः तिर्यगूर्ध्व
मधोदृष्टिं विनिधार्य महामतिः स्थिरस्थायी विनिष्कंपस्तदा योगं समभ्यसेत् ता
लमात्रा तथा योगो धारणा योजनं तथा द्वादशमात्रा योगस्तु कालतो नियमः स्मृतः अ
घोषमव्यंजनमस्वरं च अकंठताल्वोष्ठमनासिकं च अरेफजातमुभयोष्ठवर्जितं
यदक्षरं न क्षरते कदाचित् येनासौ पश्यते मार्गं प्राणस्तेन हि गच्छति अतः समभ्यसे
न्नित्यं सन्मार्गगमनाय वै हृद्द्वारं वायुद्वारं वा उर्ध्वद्वारमतः परं मोक्षद्वारबिलं चैव

स्खरं मं उलं विंदुः भयं क्रोधमथालस्यमतिस्वप्नातिजागरं अत्याहारमनाहारं नि
त्यं योगी विवर्जयेत् अनेन विधिना सम्यक् नित्यमभ्यसतः क्रमात् स्वयमुत्पद्य
ते ज्ञानं त्रिभिर्मासैर्न संशयः चतुर्भिः पश्यते देवं पंचभिस्तुल्यविक्रमः इच्छयाप्रा
ति कैवल्यं षष्ठे मासि न संशयः पार्थिवः पंचमात्राणि चतुर्मात्राणि वारुणः आग्नेय
स्तु त्रिमात्राणि द्विमात्रो मारुतस्तथा एकमात्रस्तथाकाशो ह्यर्द्धमात्रं च चिंतयेत् सिद्धिं
कृत्वा तु मनसा चिंतयेदात्मनात्मनि त्रिंशत्पर्वांगुलः प्राणो यत्र प्राणः प्रतिष्ठि
तः एष प्राण इति ख्यातो बाह्यप्राणः सगोचरः अशीतिः षट्शतं चैव सहस्राणि त्र
योदश लक्षश्चैको विनिःश्वासस्याहोरात्रप्रमाणतः प्राण आद्यो हृदिस्थाने अ
पानस्तु पुनर्गुदे समानो नाभिदेशे तु उदानः कंठमास्थितः व्यानः सर्वेषु चांगेषु

सदावायुस्त्यतिष्ठति अथवर्णास्तु पंचानांप्राणादीनामनुक्रमात् रक्तवर्णोमणिप्र
ख्यः प्राणोवायुः प्रकीर्तितः अपानस्तस्यमध्येतुइंद्रगोपकसन्निभः समानस्त
स्यमध्येतुगोक्षीरस्फटिकप्रभः अपांडरउदानस्तुव्यानोप्यर्चिसमप्रभः
यस्येवमंडलंभित्वामारुतोयातिमूर्द्धनि यत्रयत्रम्रियेद्वापिनसभूयोभिजायते न
सभूयोभिजायतइतिद्वितीयः इत्यथर्ववेदे अमृतबिंदूपनिषत्समाप्ताएकोनविंशतिः
१९ ॐयोगतत्वंप्रवक्ष्यामियोगिनांहितकाम्यया तच्छ्रुत्वाचपठित्वाचसर्वपापैःप्रमु
च्यते विष्णुर्नाममहायोगीमहाकायोमहातपाः तत्वमार्गेयथादीपोदृश्यतेपुरुषो
त्तमः १ ॐयदिशेलसमंपापंविस्तीर्णंयोजनान्बहून् भिद्यतेध्यानयोगेनना
न्योभेदःकदाचन बीजाक्षरात्परंबिंदुंनादंबिंदोःपरेस्थितं सशब्दंचाक्षरं क्षी

तो निःशब्दं परमं पदं अनाहतं च यच्छब्दं तस्य शब्दस्य यत्परं तत्परं विंदते यस्तु स यो
गी छिन्नसंशयः वालाग्रशतसाहस्रं तस्य भागस्य भागशः तस्य भागस्य भागार्द्धं
तत्ज्ञेयं च निरंजनं पुष्पमध्ये यथा गंधं पयोमध्ये यथा घृतं तिलमध्ये यथा तैलं पा
षाणेष्विव कांचनं एवं सर्वाणि भूतानि मणौ सूत्रमिवात्मनि स्थिरबुद्धिरसंमूढो ब्र
ह्मविद्ब्रह्मणि स्थितः तिलानां तु यथा तैलं पुष्पे गंधमिवाश्रितं पुरुषस्य शरीरे तु
सबाह्याभ्यंतरं स्थितिः हृदये तु सकलं विद्यात्तस्यैव निष्कला सकले निष्क
ले भावे सर्वत्रात्मा व्यवस्थितः अतसीपुष्पसंकाशं नाभिस्थाने प्रतिष्ठितं च
तुर्भुजं महावीरं पूरकेन विचिंतयेत् कुंभकेन हृदिस्थाने चिंतयेत्कमलासनं ब्र
ह्माणं रक्तगौरांगं चतुर्वक्त्रं पितामहं रेचकेन तु विद्यात्तु ललाटस्थं त्रिलोचनं ॥

मुद्धस्फटिकसंकाशं निष्कलं पापनाशनं अष्टपत्रमधः पुष्पमूर्ध्वनालमधोमुखं क
दलीपुष्पसंकाशं सर्वदेवमनामयं शताक्षे शतपत्राढ्यं विप्रकीर्णाभिकर्णिकं त
त्रार्कचंद्रवह्नीनामुपर्युपरि चिंतयेत् पद्मस्योत्थापनं कृत्वा बोद्धुं चंद्राग्निसूर्य
योः तस्याक्षे स्याद्यमात्रं च यस्तं वेद स वेदवित् तैलधारामिवाच्छिन्नां दीर्घघंटानि
नादवत् अवाग्रं प्रणवस्याग्रं यस्तं वेद स वेदवित् प्रणवो धनुः शरो ह्यात्मा ब्रह्म त
ल्लक्ष्यमुच्यते अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् स्वदेहमरणिं कृत्वा प्रणवं
चोत्तरारणिं ध्याननिर्मथनाभ्यासाद्देवं पश्यति गूढवत् यथैवोत्पलनालेन साय
माकर्षयेत्पुनः तथैवोत्कर्षयेद्वायुं योगी योगपदे स्थितः अर्द्धमात्रां रजुं कृत्वा हृ
न्मूर्तं तु पंकजं कर्षयन्नालमार्गेण भ्रुवोर्मध्ये नयेल्लयं भ्रुवोर्मध्ये ललाटस्तु ना
द तस्यपुरु बीजमाहुः स आत्मा संचरते ध्रुवं ॥ त्रिस्थानं च त्रिमार्गं च त्रिब्रह्म च त्रिरक्षरं ॥ त्रिमात्रं

र्धमात्रं च यस्तं वेद [illegible] स वेदवित् ॥ ६ ॥

५४

सिकायास्तु मूलतः अमृतस्यात्मं विजानीयाद्विष्वस्यायतनं महत् विश्वस्यायतनं म
हदिति २ इत्यथर्ववेदे ध्यानबिंदूपनिषत्समाप्ता विंशतिः॥२०॥ॐ तेजोबिंदुपरं
ध्यानं विश्वातीतं हृदिस्थितं आणवं शांभवं शाक्तं स्थूलं सूक्ष्मं परं च यत् दुःसा
ध्यं च दुराराध्यं दुष्प्रेक्ष्यं च दुराश्रयं दुर्लक्ष्यं दुस्तरं ध्यानं मुनीनां च मनीषिणां॥
जिताहारो जितक्रोधो जितसंगो जितेंद्रियः निर्द्वंद्वो निरहंकारो निराशीरपरिग्र
हः अगम्यागम्यकर्त्ता च गुरुमानार्थमानसः मुखानि त्रीणि विंदंति त्रिधामा हं
स उच्यते १ परं गुह्यमिदं स्थानमव्यक्तं ब्रह्म निराश्रयं व्योमरूपं कला सूक्ष्मं वि
ष्णोस्तत्परमं पदं त्र्यंबकं त्रिगुणं स्थानं त्रिधातु रूपवर्जितं निश्चलं निर्विकल्पं
च निराधारं निराश्रयं उपाधिरहितं स्थानं वाङ्मनोतीतगोचरं स्वभावभावना

५४

ग्राह्यं संधानैकपदोज्झितं आनंदं नंदनातीतं दुःप्रेक्ष्यमजमव्ययं चित्तवृत्तिविनिर्मु
क्तं शाश्वतं ध्रुवमच्युतं तद्ब्रह्माणं तदध्यात्मं तन्निष्ठाः सत्परायणं अचित्तं चित्तमात्म
नं तद्ब्रह्मपरमं स्थितं अशून्यं शून्यभावं च शून्यातीतमवस्थितं न ध्यानं न च वा ध्या
ता न ध्येयो ध्येय एव च सर्वं च परमं शून्यं न परं परमात्परं अचिंत्यमप्रबुद्धं च सत्यं
न च न संविदुः मुनीनां तत्वयुक्तं तु न देवा न परं विदुः लोभं मोहं भयं दर्पं कामं क्रो
धं च किल्बिषं शीतोष्णं क्षुत्पिपासं च संकल्पं च विकल्पकं न ब्रह्मकुलदर्पं च न मुक्ति
ग्रंथसंचयं न भयं सुखदुःखं च तथा मानापमानयोः एतद्भावविनिर्मुक्तं तद्ग्रा
ह्यं ब्रह्म तत्परं तद्ग्राह्यं ब्रह्म तत्परमिति इत्यथर्ववेदे तेजोबिंदूपनिषत्समाप्तं एक
विंशतिः २१ ॐ योगशिक्षां प्रवक्ष्यामि सर्वज्ञानेषु चोत्तमां यदा तु ध्यायते मंत्रं गा

त्वक्पो भिजायते आसनेपद्मकं बध्वा यच्चान्यदपि रोचते कुर्यान्नासाग्रदृष्टिं च हस्तौ
पादौ तु संयतौ मनः सर्वत्र संयम्य ॐकारं तत्र चिंतयेत् ध्यायतेस्ततं प्राज्ञो हृत्कृ
त्वा परमेष्ठिनं एकस्तंभेन वद्वारे त्रिस्थूणे पंचदैवते ईदृशेन तु शरीरे वाम तिमा
नुपलक्षयेत् आदित्यमंडलं दिव्यं रश्मिज्वाला समाकुलं तस्य मध्यगतो वह्निः प्र
ज्वलद्दीपवर्त्तिवत् दीपशिखायां यामात्रा सा मात्रा परमेष्ठिनः भिंदंति योगिनः सू
र्य्ययोगाभ्यासेन वै पुनः द्वितीये सुषुम्णाद्वारं परिभुद्धं विसर्पति कपालसंपुटं भित्वा
ततः पश्यति तत्परं अथ न ध्यापयेज्ञो नु रालस्याच्च प्रमादतः यदि त्रिकालमा
वर्त्तेत्स गच्छेत्परमं पदं पुण्यमेतत् समासाद्य संक्षेपात्कथितं मया लब्धयोगेन
बाद्ध्यं प्रसन्ने परमेष्ठिनं जन्मांतरसहस्रेषु यदा नाम्नाति किल्बिषं तदा

पश्यंति योगेन संसारछेदनं परं संसारछेदनं परमिति १ इत्यथर्ववेदे योगशिखोपनिष
त्समाप्ता द्वाविंशतिः ॥२२॥ ॐ योगतत्वं प्रवक्ष्यामि योगिनां हितकाम्यया तछ्रुत्वा च प
ठित्वा च सर्वपापैः प्रमुच्यते विष्णुर्नाम महायोगी महामायो महातपाः तत्वमार्गे य
था दीपो दृश्यते पुरुषोत्तमः यः स्तन्यं पूर्वं पीत्वा निष्पीड्य च पयोधरान् यस्मिन्जातो
भगे पूर्वं तस्मिन्नेव भगे रमेत या माता सा पुनर्भार्या या भार्या जननी हि सा यः पिता
स पुनः पुत्रो यः पुत्रः स पुनः पिता एवं संसारचक्रेण कूपचक्रे घटा इव भ्रमंतो योनि
जन्मानि श्रुत्वा लोकान्समश्नुते त्रयो लोकास्त्रयो देवास्त्रयः संध्यास्त्रयः स्वराः ॥
त्रयोग्नयो गुणास्त्रीणि स्थिताः सर्वत्र याक्षरे त्रयाणामक्षरे प्रोते योधीते प्यर्द्धमक्षरं
तेन सर्वमिदं प्राप्तं लब्धं तत्परमं पदं पुष्पमध्ये यथा गंधं पयोमध्ये स्ति सर्पिवत् ति

५६
56

लेमध्येयथातैलंपाघाटो द्विवकांचनं हृदिस्थाने स्थितंपद्मं तच्चपद्ममधोमुखं उ
र्ध्वनालमधो बिंदुंतस्यमध्येस्थितंमनः अकारेणाचितंपद्ममुकारेणैवभिद्यते॥म
कारेलभतेनादमर्द्धमात्रातुनिश्चला शुद्धस्फटिकसंकाशं किंचित्तस्य थ्यमरीचिवृते
लभतेयोगयुक्तात्मा पुरुषोत्तमतत्परः कूर्मवत्पाणिपादाभ्यांशिरस्यात्मनिधारये
त एवंसर्वेषुद्वारेषुवायुःपूरितपूरकः निबिद्धेत्वनवद्वारेऊर्द्ध्वंसंनिःश्वसंतथा॥
घटमध्येयथादीपंनिर्वातंकुंभकंविदुः पद्मस्तत्रमिवाद्धि न्नमूर्द्ध्ववायुविमोहि
तो भुवोर्ललाटमध्यस्थंततस्तेयंचनिरंजनं निबिद्धेतननिर्वाते निर्जने निरुपद्र
वे निश्चितंचात्मभूतानामरिष्टंयोगसेवया अरिष्टंयोगसेवया॥इत्यथ
विवेदेयोगतत्वोपनिषत्समाप्तात्रयोविंशतिः २३ ॐअथाहिताग्निर्म्रियेतेप्रेत

५६

स्य मंत्रैः संस्कारैः प्रतिष्ठते स्वस्थो वा आश्रमपारं गच्छेयमित्येतां संपत्तिमेधकामो विधि
वत्संभारान्संभृत्यारण्ये गत्वा अमावास्यायां प्रातरेवाग्नीनुपसमाधाय पितृभ्यः श्रा
द्धं तर्पणं कृत्वा ब्राह्मणेष्टिं निर्वपेत्स सर्ववित्ः सर्वविद्यस्य ज्ञानमयं तपस्तस्यैषा आहु
तिर्हिरण्यामृतत्वाय कल्पत इत्येवमतऊर्ध्वं पद्ब्रलाभ्युदयं दिवं च लोकमिमं च सर्वं च
सर्वमभिजित्य सर्वाश्रयं दधतु समनास्यमाना ब्रह्मज ज्ञानमिति ब्रह्मणोऽथ वैराप्र
जापतये द्विनुपत्तयेऽग्नये स्विष्टकृत इति हुत्वा यज्ञपात्रं गच्छेत्स्यग्नावरणीं हुत्वा चितस्स
स्वायमिति च तुर्भिरनुवाकै राज्याहुतीर्जुहुयात्ते रेवा प्रतिष्ठते तथाग्नेरात्मिमिति च
द्वावग्नी समारोपयेद्धुतवान्स्यादतं ऽद्गित इति नवश्लोकाः ॥ ब्रह्मचर्याश्रमे द्विजो
गुरुशुश्रूषणपरो वेदानधीत्य तानुज्ञात उच्यते गुरुणाश्रमी दारमाहृत्य स

५८
57

हृश्यमग्निमादायशक्तितोब्राह्मीमिष्टिंयजेतासमहोरात्रात्तानिर्वपेत्तंविभज्यसुत्ता
नेर्थेआम्यकाम्यान्विसृज्यचचरेतवर्गेणवर्न्नेनभुचोद्देशेपरिभ्रमनवायुभ
क्षांबुभक्षोवाविहितात्तोत्तरंफलैःस्वशरीरेसमारोप्यपृथिव्यांचाप्युपावहः स
हितेनैवपुरुषःकथंसन्यस्तउच्यतेसनामध्येयसंकिंतस्मिन्सन्यस्तउच्यते
तस्मात्फलविमुक्तांगीसंन्यासंसहतेद्धिमान्अग्निवर्तीनिष्क्रमतिवान्प्रस्थप्र
पद्यते॥ लोकाभार्ययासहितोवनेगच्छतिसंयुतः त्यक्त्वाकामान्सन्यसतिभ
यंकिमनुतिष्ठतिकिंवादुःखंसमुद्दिश्यभोगांस्त्यजेत्यत्युच्छितान् गर्भवासभ
याद्भीतःशीतोष्णाभ्यांतथैवच॥ गुहांप्रवेष्टुमिच्छामिपरंपदमनामयं इति स
न्यस्याग्निमपुनरावर्त्तनंजन्मजायाभार्याहमित्यथाध्यात्ममंत्रान्जपेद्दी

५८

ह्रामुपेयात्कषायवासाः कक्षोपस्थलोमानि वर्जयेत् उर्ध्वकोबाहुर्विमुक्तमार्गो भवत्य
निकेतश्चरेद्भिक्षाशी निदध्यात्पवित्रं धारयेज्जंतुसंरक्षणार्थं तत्र श्लोकाः ॥ कुंडिकां
चर्मसंशिक्यं त्रिविष्टपमुपानहौ शीतोपघातिनीं कंथां कौपीनाच्छादनं तथा प
वित्रं स्नानशाटीं च उत्तरसंग त्रिदंडकः अतोतिरिक्तं यत्किंचित्सर्वं तद्वर्जयेद्यतिः ॥
नदीपुलिनशायी स्याद्देवागारेषु वाहतः ॥ नात्यर्थं सुखदुःखाभ्यां शरीरमुपतापयेत् ॥
स्नानं ध्यानं तथा शौचं मद्भिः पूताभिराचरेत् स्तूयमानो न तुष्येत निंदितो न शपे
त्परान् भिक्षादि वैदलं पात्रं स्नानद्रव्यमवारितं एतां वृत्तिमुपासीत जितेंद्रियो यजेत्स
दा विश्वायामनसंयोगो मनसाकाश आकाशाद्वायुर्वायोर्ज्योतिर्ज्योतिष आपः
अद्भ्यः पृथिवी पृथिव्या इत्येषां भूतानां ब्रह्म प्रपद्यते अजरममरमक्षरमव्ययं

५८ 58

प्रपद्यते तदभ्यासेन प्राणापानौ संयम्य तत्र श्लोकाः वृषणापीनयोर्मध्ये पाणी आस्था
य संश्रयेत संदश्य दशनैर्जिह्वां यवमात्रे विनिर्गतो माषमात्रां तथा दृष्टिं श्रोत्रे स्था
प्य तथा भुवि श्रवणे नासिके नेगंधायन त्वचं न स्पर्शयन्नीति शैवं पदं यत्र तद्ब्रह्म
त्परात्परं तदभ्यासेन लभ्येत पूर्वजन्मार्जितात्मनोः अथ तैः संभृतैर्वायुः स
स्थात्प हृदयं तपः ऊर्ध्वं प्रपद्यते देहाद्भित्वा मूर्द्धानमव्ययं अथायं मूर्द्धानमस्य दे
हस्यैवामतिमतो येप्राप्य परमां गतिं भूयस्तेन निवर्त्तनं परात्परमवस्थितं परात्पर
मवस्थितमिति इत्यथर्ववेदसंन्यासोपनिषत्समाप्ता चतुर्विंशतिः ॥२४॥ ॐ आर

X न्या ३

णिः प्रजापतेर्लोकं जगाम तं गत्वोवाच केन भगवन्कर्माण्यशेषतो विसृजा
मीति तं होवाच प्रजापतिस्तव पुत्रान्भ्रातॄन्बंध्वादीन् शिखां यज्ञोपवीतं ५८

यागं सूत्रंचस्वाध्यायंचभूर्लोकंचभुवोलोकंचस्वर्लोकंचमहर्लोकंचजनोलोकंचतपोलोकंचस
त्यलोकंचातलपातालवितलनितलसुतलरसातलतलातलमहातलब्रह्मांडंचविव
र्जयेद्दंडमाच्छादनंचकौपीनंपरिग्रहेत् शिखंविसृजेदिति प्रथमःखंडः॥१॥गृहस्थोब्र
ह्मचारीवानप्रस्थोवाउपवीतंशिखांभूमावप्सुवाविसृजेल्लौकिकाग्नीनुदराग्नौस
मारोपयेद्गायत्रींचस्ववागग्नौसमारोपयेत्कुटीचरोब्रह्मचारीतुकुटुंबंविसृजेत्पात्रं
विसृजेत्पवित्रंविसृजेद्दंडंलोकांश्चविसृजेदितिहोवाचातऊर्ध्वममंत्रवदाचरेत्त्रिसंध्या
दौस्नानमाचरेत्संधिसमाधावात्मन्याचरेत्सर्वेषुवेदेष्वारण्यकमावर्तयेदुपनिषद
मावर्तयेदुपनिषदमावर्तयेदिति द्वितीयःखंडः २ खल्वहंब्रह्मसूत्रंसूचनात्सूत्रं
महमेवसूत्रंब्रह्मसूत्रमहमेवविद्वान्बहिःसूत्रंत्यजेद्विद्वान्यएवंवेदकामक्रोध

मदरोषलोभमोहदर्प्पदंभासत्यादीन्परित्यजेद्दृषीसुधकवेशीतलोस्मोएकाकीयतीद्वावेवविचरेत्खल्वेदार्थयोविद्वान्सोपनयनादूर्ध्वमेतानिप्राग्वात्यजेत्पितरंपुत्रमग्न्युपवीतंकर्मकलत्रंचान्यदपीहसन्यस्तंमयासन्यस्तंमयेतित्रिःकृत्वोर्ध्ववैणवंदंडकौपीनंचपरिग्रहेन्नान्यदथभिक्षाचर्य्यंचरंतिब्रह्मचर्य्यमहिंसांचापरिग्रहंचसत्यंचायत्नेनहेरक्षतोयंचयोहेरक्षतव्यइति २ अथातःपरमहंसपरिव्राजकानामासनशयनादिकंभूमौब्रह्मचर्य्यंमृत्पात्रंवाअलाबुपात्रंदारुपात्रंवायतीनांयतयोहिभिक्षार्थग्रामंप्रविशंत्युदरपात्रंपाणिपात्रंॐहिॐहिॐहीत्येतामुपनिषदंविन्यसेत्खल्वेतामुपनिषदंविद्वान्यएवंवेदपालाशंबैल्वमाश्वत्थंदंडमजिनंयज्ञोपवीतंचत्यक्त्वाशूरायएवंवेदतद्विष्णोःपरमंपदंसदापश्यंतिसूरयः दिवीवचक्षुराततंतद्विप्रासो

विपण्यवो जागृवांसः समिंधते विष्णोर्यत्परमं पदमिति तन्निर्वाणमनुशासनमि
ति वेदानुशासनमिति वेदानुशासनमिति ४ इत्यथर्ववेदे आरुणेयोपनिषत्समाप्ता
पंचविंशतिः॥२५॥ ॐ यो नुक्रमेण संन्यसति संन्यस्तो भवति कोयं संन्यास उच्य
ते कथं संन्यस्तो भवति य आत्मानं क्रियाभिः सगुप्तं करोति मातरं पितरं भार्यां पुत्रा
न्सुहृदो बंधूननुमोदयित्वा ये चास्य ऋत्विजस्तान्सर्वांश्च पूर्ववद्वृणीत्वा वैश्वानरी
मिष्टिं कुर्यात्सर्वस्वं दद्याद्यजमानस्यांगानृत्विजऋत्विजः सर्वैः पात्रैः समा[illegible]रोप
यदाहवनीये गार्हपत्ये अन्वाहार्यपचने सत्यावसथ्याश्च प्राणापानसमानोदानव्या
नान्सर्वान्सर्वेषु समारोपयेत्सशिखान्केशान्निष्कृत्य विसृज्य यज्ञोपवीतं छि
त्वा पुत्रं दृष्ट्वा त्वं ब्रह्मा त्वं यज्ञस्त्वं सर्वमित्यनुमंत्रयेद्यद्यपुत्रो भवत्यात्मानमेव

ध्यात्वाजनपेक्षमाणः प्राचीमुदीचींवा दिशंवाप्रव्रजेच्चतुर्षुवर्णेषु भैक्षाचर्यंचरे
त्पाणिपात्रेणाशनं कुर्यादौषधवत्प्राश्नीयाद्यथालाभमश्नीयात्प्राणसंधारणा
र्थंयथामेदोवृद्धिर्नजायते कृशोभूत्वाग्रामएकरात्रंनगरेपंचरात्रंचतुरोमासा
न्वार्षिकान्ग्रामेवानगरेवा विवसेद्विशीर्णवस्त्रंवल्कलंवाप्रतिगृह्यनान्यत्
प्रतिगृह्णीयाद्यद्यशक्तोभवति योनक्लेशसहःसतप्यतेतपइतियोवाएवंक्र
मेणसंन्यसतियोनक्लेशसहःसतप्यतेतपइतियोवाएवंक्रमेणसंन्यसतियो
व्युत्तिष्ठतिकिमस्ययज्ञोपवीतंकावास्यशिखाकथंवास्योपस्पर्शनमितितान्हो
वाचेदमेवास्यतद्यज्ञोपवीतंयदात्मध्यानंविद्यासाशिखानीरेःसर्वत्रावस्थितैः
कार्यंनिवर्तयन्नुदपात्रेजलतीरेनिकेतनेहि ब्रह्मवादिनोवदंत्यस्तमितआ

द्वितीये कथं वास्योपस्पर्शनमिति तान्होवाच यथाहनि तथा रात्रौ नास्य नक्तं न वा दिवा तद्
ध्येत तद्बिभ्रत्कं सकृद्दिवा हैवास्मै भवति य एवं विद्वांस्तेनात्मानं संधत्ते देवा ह वै
समेत्य प्रजापतिमब्रुवन्न विद्मो न विद्म इति सोब्रवीद्ब्रह्मिष्टेभ्यो मे तद्वदतो ज्ञा
स्यथेति ततो वै ते ब्रह्मिष्टा न वदंतो न वदंत इत्येतत्स वै देवानां साष्टितां सालोक्यतां
सायुज्यतां गच्छति य एवं वेद सशिख्यान्केशान्निकृत्य विसृज्य यज्ञोपवीतं निष्क्र
म्य पुत्रं दृष्ट्वा त्वं ब्रह्मा त्वं यज्ञस्त्वं वषट्कारस्त्वमोंकारस्त्वं स्वाहा त्वं स्वधा धाता विधाता
त्वं त्वष्टा त्वं प्रतिष्ठासीत्यथ पुत्रो वदत्यहं ब्रह्माहं यज्ञोहं वषट्कारोहमोंकारोहं स्वाहाहं
स्वधाहं धाताहं त्वष्टाहं प्रतिष्ठास्मीति तान्येतान्यनुव्रजन्नाश्रु मापातयेद्यद्यश्रु मा
पातयेत्प्रजां विच्छिंद्यात्प्रदक्षिणमावृत्यैतश्चैतच्चानवेक्षमाणः प्रत्यायाति स स्व

र्ग्यो भवति ब्रह्मचारी वेदमधीत्य वेदौ वेदान्वा चरितब्रह्मचर्यो दारानाहृत्य पुत्रानु
त्पादितानतुरूपाभिर्वृत्तिभिर्वितत्येष्ट्वा च शक्तितो यज्ञैस्तस्य संन्यासो गुरुभिर
नुज्ञातस्य बांधवैश्चारण्यं परेत्य द्वादशरात्रं पयसाग्निहोत्रं जुहुयाद्द्वादशरात्रं प
योभक्षः स्याद्द्वादशरात्रस्यांते ग्नये वैश्वानराय प्रजापतये च प्राजापत्यं चरुं वैष्णवं
त्रिकपालमग्निं संस्थितानि पूर्वाणि दारुपात्राण्यग्नौ जुहुयान्मृन्मयान्यप्सु जु
हुयात्तैजसानि गुरवे दद्यान्मा त्वं मामवहाय परागा नाहमवहाय परागामित्येवं
गार्हपत्यमित्येवं दक्षिणाग्निमाहवनीयमरणीदेशाद्भस्ममुष्टिं पिबेदित्येके स
शिखान्केशान्निकृत्य विसृज्य यज्ञोपवीतं भूः स्वाहेत्यप्सु जुहुयादत ऊर्ध्व
मनशनमपां प्रवेशमग्निप्रवेशं वीराध्वानं महाप्रस्थानं वृद्धाश्रमं वा गच्छेत्स

मः सायं प्राग्नीयात्सोस्य सायंहोमो यत्प्रातः सोयं प्रातर्यद्दर्शीत्यद्दर्शीयत्सोर्णमासे
तत्सोर्णमास्यियद्दसंते केशश्मश्रुरोमनखान्निवापयेत्सोस्याग्निष्टोमः सोस्याग्निष्टो
मः २ संन्यासाग्नीन्नपुनरावर्तयेरयमन्तुर्जीयामावहेदित्यध्यात्ममंत्रान्जपेत्स्व
स्तिसर्वजीवेभ्य इत्युक्त्वादीक्षामुपेयात्कषायवासः कक्षोपस्थलोमान्वर्जयेल्लघु
मुंडोस्तत्रोदरपात्रः कस्मादित्यध्यात्ममस्य ध्यायतेऊर्ध्वगो वायुर्विमुक्तमार्गोभव
द निकेतश्चरेद्भिक्षाशीनं दद्याल्लवैकं धारयेज्जन्तुसंरक्षणार्थं वर्षावर्जमि
तितद्विश्लोकाः ॥ कुंडिकां चमसं शिक्यं त्रिविष्टपमुपानहौ ॥ शीतोपघातिनीं
कंथां कौपीनाच्छादनं तथा ॥ पवित्रं स्नानशाटीं च उत्तरासंगमेव च यज्ञोपवी
तं वेदांश्च सर्वं तद्वर्जयेद्यतिः स्नानं ध्यानं तथा शौचमद्भिः पूताभिराचरेत् ॥

६२

62

नदीपुलिनशायीस्याद्देवागारेषुवास्वपेत नात्यर्थंसुखदुःखाभ्यांशरीरमुपतापये
त स्तूयमानोनतुष्येतनिंदितोनशपेत्परान् एतांवृत्तिमुपासंतस्तापयंती
द्रियाणियत तापयंतीद्रियाणियतइति तृतीयःखंडः॥३॥इत्यथर्ववेदेकंठ
श्रुत्युपनिषत्समाप्ता॥षड्विंशतिः॥२६॥ॐदेवताऋषयः सर्वेब्रह्माणमिदमब्रुवन्
मृतस्यदीयतेपिंडकथंगृह्णात्यचेतसः भिन्नेपंचात्मकेदेहेगतेपंचसुपंच
धा हंसस्त्यक्त्वागतोदेहंकस्मिन्स्थानेप्रतितिष्ठितः ब्रह्मोवाच॥त्र्यहंवसति
तोयेषुत्र्यहंवसतिचाग्निषु त्र्यहमाकाशतोभूत्वादिनमेकंतुवायुगः प्रथमेन
तुपिंडेनगलानांतस्यसंभवः द्वितीयेनतुपिंडेनमांसत्वक्शोणितोद्भवः॥तृ
तीयेनतुपिंडेनमतिस्तस्याभिजायते चतुर्थेनतुपिंडेनअस्थिमज्जाप्रजायते॥

६२

पंचमेन तु पिंडेन हस्तांगुल्यः शिरोमुखं षष्ठेन कृत पिंडेन हृत्कंठं तालु जायते
सप्तमेन तु पिंडेन दीर्घमायुः प्रजायते अष्टमेन तु पिंडेन वाचं पुष्णाति वीर्यवान्
नवमेन तु पिंडेन सर्वेंद्रियसमाहृतः दशमेन तु पिंडेन भावानां प्लवनं तथा पिंडे
पिंडशरीरस्य पिंडदानेन संभवः पिंडदानेन संभव इति इत्यथर्ववेदे पिंडोपनि
षत्समाप्ता सप्तविंशतिः ॥२७॥ ॐ अथैवां गिरा त्रिविधः पुरुषः तद्यथा बाह्यात्मां
तरात्मा परमात्मा चेति त्वगस्थिमांसलोमांगुल्यंगुष्ठपृष्ठीवसानखगुल्फोदरनाभि
मेढ्रकटयूरुकपोलभ्रूललाटबाहुपार्श्वशिरोधमनिकाक्षीणिश्रोत्राणि भवंति
जायते म्रियत इत्येष बाह्यात्मा [illegible] नाम १ अथांतरात्मा नाम पृथिव्यप्तेजो वा
य्वाकाशमिच्छाद्वेषसुखदुःखकाममोहविकल्पनादिभिः स्मृतिलिंगउदा

६३ 63

त्तानुदात्तह्रस्वदीर्घस्खलितगर्जितस्फुटितमुदितनृत्यगीतवादित्रप्रलयविजृं
भितादिभिः श्रोताघ्राताऽरसयिता मंता बोद्धा कर्त्ता विज्ञानात्मा पुरुषः पुराणान्या
योमीमांसाधर्मशास्त्राणीति श्रवणघ्राणाकर्षणकर्मविशेषणं करोत्येषो
तरात्मानाम २ अथ परमात्मानाम यथाक्षरमुपासनीयः स च प्राणायामप्र
त्याहारसमाधियोगानुमानाध्यात्मचिंतके वटकणिकाश्यामाकतंडुलोवालाग्रश
तसहस्रविकल्पनादिभिर्न लभ्यते नोपलभ्यते न जायते न म्रियते न शुष्यते न
दह्यते न कंपते निर्गुणः साक्षीभूतः शुद्धो निरवयवा केवलः सूक्ष्मो निष्कलो नि
रंजनो निरभिमानः शब्दस्पर्शरूपरसगंधवर्जितो निर्विकल्पो निराकांक्षः
सर्वव्यापी सोऽचिंत्योवर्ण्यश्च पुनात्यशुद्धान्यपूतानि निष्क्रियः संस्कारो ना ६३

स्तीत्येव परमात्मा नाम ॥ तृतीयः खंडः ॥ ३ ॥ इत्यथर्ववेदे आउपनिषत्समाप्ता विंश
तिः ॥ २८ ॥ नमोथर्ववेदायों नमो भगवते श्रीमद्दिव्यलक्ष्मीनृसिंहोनमः साम्ने ॥ ॐ
नमो ब्रह्मवेदाय श्रीनृसिंहस्वरूपिणे भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्ष
भिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेम देवहितं यदायुः १ ॐ स्व
स्ति न इंद्रो वृद्धश्रवाः स्वस्तिनः पूषा विश्ववेदाः स्वस्ति नस्तार्क्ष्यो अरिष्टनेमिः स्व
स्ति नो बृहस्पतिर्दधातु २ ॐ शांतिः शांतिः ॐ शांतिः ॥ ॐ आपो ह वा इदमासन्स
लिलमेव स प्रजापतिरेकः पुष्करपर्णे समभवत्तस्यांतर्मनसि कामः समवर्तत इदं
सृजेयमिति तस्माद्यत्पुरुषो मनसाभिगच्छति तद्वाचा वदति तत्कर्मणा करोति
देषा उ भ्युक्ता कामस्तदग्रे समवर्तताधि मनसो रेतः प्रथमं यदासीत् सतो बंधु

मसत्तिंनिरविंदन्नहृदिप्रतीष्याद्भवयोमनीषेत्युपेनंतदुपनमितियत्कामोभवति
सतपोतप्यतसतपस्तप्त्वासएनंमंत्रराजंनारसिंहानुष्टुभमपश्यत्तेनैवसर्व
मिदमसृजतयदिदंकिंचतस्मात्सर्वमिदमानुष्टुभमित्याचक्षतेयदिदंकिंचानु
ष्टुभोवाइमानिभूतानिजायंतेअनुष्टुभाजातानिजीवंत्यनुष्टुभंप्रयंत्यभिसं
विशंतितस्यैषाभवत्यनुष्टुप्प्रथमाभवत्यनुष्टुबुत्तमाभवतिवाग्वोअनुष्टुब्वाचैव
प्रयांतिवाचेवोद्यंतिपरमावाएषाछंदसांयदनुष्टुबिति प्रथमःखंडः १ ससा
गरांसपर्वतांसप्तद्वीपांवसुंधरां तत्साम्नःप्रथमंपादंजानीयाद्योजानीया
त्सोमृतत्वंगच्छति॥यक्षगंधर्वाप्सरोगणसेवितमंतरिक्षंतत्साम्नोद्वितीयं
पादंजानीयाद्वसुरुद्रादित्यैःसर्वैर्देवैःसेवितांदिवंतत्साम्नस्तृतीयंपा

दं जानीयाद्ब्रह्मस्वरूपं निरंजनं परमव्योमकं तत्साम्नश्चतुर्थं पादं जानीयाद्यो जानी
ते सोमृतत्त्वं च गच्छति ऋग्यजुः सामाथर्वाणश्चत्वारो वेदाः सांगाः सशाखाश्चत्वारः पा
दा भवंति किं ध्यानं किं दैवतं कान्यंगानि कानि दैवतानि किं छंदः कऋषिरिति द्वितीयः
खंडः ॥२॥ स होवाच सत्योह वै तां सावित्र्यष्टाक्षरं पदं श्रियाभिषिक्तं तत्साम्नोंगं वे
द श्रिया हे वाभिषिच्यते सर्वे वेदाः प्रणवादिकास्तं प्रणवं तत्साम्नोंगं वेद स त्रींल्लो
कान् जयति चतुर्विंशत्यक्षरा महालक्ष्मीर्यजुस्तत्साम्नोंगं वेद स आयुर्यशः कीर्ति
ज्ञानैश्वर्यवान्भवति तस्मादिदं सांगं साम जानीयाद्यो जानीते सोमृतत्त्वं च गच्छ
ति सावित्री प्रणवं यजुर्लक्ष्मी स्त्रीशूद्राय नेच्छंति द्वात्रिंशदक्षरं साम जानी
याद्यो जानीते सोमृतत्वं च गच्छति सावित्री लक्ष्मीयजुः प्रणवं यदि जानीया

६५

65

त्त्रीभूद्रः सऽमृतो घोव गच्छति तस्मात्सर्वेद्यानाचष्टे यद्याचष्टे स आचार्यस्तेनैव
मृतो घो गच्छति ॥ तृतीयः खंडः ३ स होवाच प्रजापतिरग्निर्वै वा इदं सर्वं विश्वा
भूतानि प्राणा वाइंद्रिया लिपश्रवोन्न ममृतं सम्राट् स्वराट् विराट् तस्मात्साम्नः
प्रथमं पादं जानीयाद्य ऋग्यजुः सामाथर्वरूपं तस्थातेराद्वित्य हि रसमयः पुरुषः
स साम्नो द्वितीयं पादं जानीयाद्य ओषधीनां प्रभवति तारापतिः सोमस्तत्साम्न
स्तृतीयं पादं जानीयात्स ब्रह्मा स शिवः स हरिः स इंद्रः सोऽग्निः सोऽक्षरः परमः
स्वराट् तत्साम्नश्चतुर्थं पादं जानीयाद्यो जानीते सोऽमृतत्वं च गच्छत्युग्रं प्रथम
स्याद्यं ज्वलंतं द्वितीयस्याद्यं नृसिंहं तृतीयस्याद्यं मृत्युं चतुर्थस्याद्यं साम जा
नीयाद्यो जानीते सोऽमृतत्वं च गच्छति तस्मादिदं साम यत्र कुत्रचिन्नाचष्टे

६५

यदिदातुमवेक्षते पुत्राय मुमुक्षवे दास्यत्यन्यस्मै शिष्याय चेति ॥ चतुर्थः खंडः ४
क्षीरोदार्णवशायिनं नृकेशरिं योगध्येयं परमं पदं साम जानीयाद्यो जानीते सोमृ
तत्वं च गच्छति वीरं प्रथमस्यार्द्धात्यं सत्तद्वितीयस्यार्द्धात्यं हंसं तृतीयस्यार्द्धात्यं मृत्यु
चतुर्थस्यार्द्धात्यं साम जानीयाद्यो जानीते सोमृतत्वं च गच्छति तस्मादिदं साममयेन
केनचिदाचार्यमुखेन यो जानीते स तेनैव संसारान्मुच्यते मोचयति मुमुक्षुर्भवति ज
पात्तेनैव शरीरेण देवतादर्शनं करोति तस्मादिदमेव मोक्षद्वारं कलौ नान्येषां भव
ति तस्मादिदं सांगं साम जानीयाद्यो जानीते सो मुमुक्षुर्भवति ॥ पंचमः खंडः ॥
ऋतं सत्यं परं ब्रह्म पुरुषं न्रकेशरिं विग्रहं कृष्णपिंगलं उर्ध्वरेतो विरूपाक्षं
शंकरं नीललोहितमुमापतिं पशुपतिं पिनाकिनं ह्यमितद्युतिमीशानः

सर्वविद्यानामीश्वरः सर्वभूतानां ब्रह्माधिपतिर्ब्रह्मणोधिपतिर्यो यजुर्वेदवा
च्यस्तं साम जानीयाद्यो जानीते सोमृतत्वं च गच्छति महाप्रथमांतार्धस्याद्यं चतो द्विती
यांतार्द्धस्याद्यं भीषणं तृतीयांतार्धस्याद्यं नमः चतुर्थांतार्द्धस्याद्यं साम जानीयाद्यो जा
नीते सोमृतत्वं च गच्छति तस्मादिदं साम तच्चिदानंदमयं परं ब्रह्म तमेवं विद्वानमृती
ह भवति तस्मादिदं सांगं साम जानीयाद्यो जानीते सोमृतत्वं च गच्छति ॥ षष्ठः खंडः
॥ विश्वसृज एतेन वै विश्वमिदमसृजंत यद्विश्वमसृजंत तस्माद्विश्वसृजो वि
श्वमेनाननुप्रजायते ब्रह्मणः सायुज्यं सलोकतां जयति तस्मादिदं सांगं साम
जानीयाद्यो जानीते सोमृतत्वं च गच्छति विष्णुं प्रथमस्यांत्यं मुखं द्वितीयस्यांत्य
भद्रं तृतीयस्यांत्यं मृत्युं चतुर्थस्यांत्यं साम जानीयाद्यो जानीते सोमृतत्वं च

गच्छति यो सौ सर्ववेदयदिदं किंचात्मनि ब्रह्मण्यनुष्टुभं जानीते सो मृतत्वं च गच्छति स्त्री
पुंसो वा यदि ह स्यात्तु मपेक्षते स सर्वैश्वर्यं ददाति यत्र कुत्रापि म्रियते देहांते देवः प
रं ब्रह्मेति तारकं व्याचष्टे येनामृती भूत्वा सो मृतत्वं च गच्छति तस्मादिदं साम मध्यगः
जपति तस्मादिदं साम गं प्रजापतिर्य एवं वेदेति महोपनिषद्य एतां महोपनिषदं
वेद स कृतपुरश्चरणो पि महाविष्णुर्भवति महाविष्णुर्भवति ॥ इत्यथर्ववेदे नृसिंहपू
र्वतापिनीये महोपनिषत्प्रथमा समाप्ता एकोनत्रिंशत ॥२९॥ ॐ देवा ह वै मृत्योः पा
प्मभ्यः संसाराच्च बिभेयुः ते प्रजापतिमुपधावंस्तेभ्य एतं मंत्रराजं नारसिंहमानु
ष्टुभं प्रयच्छत्तेनेव सर्वं मृत्युमजयन्सर्वपाप्मानमजरन संसाराच्चोत्तरंस्तस्माद्यो
मृत्योः पाप्मभ्यः संसाराच्च बिभेयात्स एतं मंत्रराजं नारसिंहमानुष्टुभं प्रति

६७

67

गृह्णीयात्समृत्युं जयति स पाप्मानं तरति स संसारं तरति तस्य ह वै प्रणवस्य या पूर्वा
मात्रा पृथिव्यकारः स ऋग्भिः ऋग्वेदो ब्रह्मा वसवो गायत्री गार्हपत्यः सा प्रथमः
पादो भवति द्वितीयांतरिक्षं स उकारः स यजुर्भिः यजुर्वेदो विष्णुरुद्रास्त्रिष्टुब्दक्षि
णाग्निः सा द्वितीयः पादो भवति तृतीया द्यौः स मकारः स सामभिः सामवेदो रुद्र
आदित्या जगत्याहवनीयः सा तृतीयः पादो भवति यावसानेस्य चतुर्थार्धमा
त्रा सा सोमलोकः ओंकारः सोथर्वणैर्मंत्रैरथर्ववेदः संवर्तकोग्निर्मरुतो विरा
डेकऋषिर्भास्वती सा सा मन्नश्चतुर्थः पादो भवति प्रथमः खंडः ॥१॥ अष्टाक्षरः प्र
थमः पादो भवत्यष्टाक्षरास्त्रयः पादा भवंत्येवं द्वात्रिंशदक्षराणि संपद्यंते द्वात्रिं
शदक्षरानुष्टुरानुष्टुब्भवत्यनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमिदमुपसंहृतं

६७

तस्याहिपंचांगानिभवंतिचत्वारःपादाश्चत्वार्यंगानिभवंतिसप्रणवः सर्वंपंचमं
भवत्योंहृदयायनमः ॐशिरसेस्वाहोंशिखायैवौषट ॐकवचायहुंमामस्त्राय
फट्इतिप्रथमंप्रथमेनयुज्यतेद्वितीयंद्वितीयेनतृतीयंतृतीयेनचतुर्थंचतुर्थेनपंच
मंपंचमेनव्यतिषिक्तावाइमेलोकास्तस्माद्यतिषक्तान्यंगानिभवंत्योमित्येतद
क्षरमिदंसर्वंतस्मात्प्रत्यक्षरंउभयतॐकारोभवतीत्यक्षराणांन्यासमुपदिशं
तिब्रह्मवादिनस्तस्यहवाउग्रंप्रथमंस्थानंजानीयाद्योजानीतेसोमृतत्वंच
गच्छतिवीरंद्वितीयंस्थानंमहाविष्णुंतृतीयंस्थानंज्वलंतंचतुर्थंस्थानंसर्व
तोमुखंपंचमंनृसिंहंषष्ठंभीषणंसप्तमंभद्रमष्टमंमृत्युंनवमंनमामिदशम
महमित्येकादशंस्थानंजानीयाद्योजानीतेसोमृतत्वंचगच्छत्येकादशपदाः

ष्टुब्भवत्यनुष्टुभा सर्वमिदं सृष्टमनुष्टुभा सर्वमुपसंहृतं तस्मात्सर्वमिदमानु
ष्टुभं जानीयाद्यो जानीते सोमृतत्वं च गच्छति द्वितीयः खंडः ॥२॥ देवा ह वै प्रजा
पतिमब्रुवन्नथ कस्मादुच्यते उग्रमिति स होवाच प्रजापतिर्यस्मात्स्वमहि
म्ना सर्वांल्लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतान्युद्गृह्णात्यजस्रं सृ
जति विसृजति वासयत्युद्ग्राह्यत उद्गृह्यते स्तुहि श्रुतं गर्त्तसदं युवानं मृगं न
भीममुपहंतुमुग्रं ॥ मृडजरित्रे सिंह स्तवानो अन्यं ते अस्मिन्निवपंतु सेनाः
तस्मादुच्यते उग्रमित्यथ कस्मादुच्यते वीरमिति यस्माच्च महिम्ना सर्वांल्लो
कान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि विरमयति विरामयत्यज
स्रं सृजति विसृजति वासयति यतो वीरः कर्मण्यः सुदक्षो युक्तः ग्रावा

जायते देवकामः तस्मादुच्यते वीरमिति अथ कस्मादुच्यते महाविष्णुमिति यस्मात्
स्वमहिम्ना सर्वान् लोकान्व्याप्नोति व्यापयति स्नेहो यथा पललपिंडमोतप्रोतम-
नुप्राप्तं व्यतिषक्तो व्याप्यते व्यापयते यस्मान्न जातः परो न्योस्ति य आविवेश भुवना-
नि विश्वा यस्मादन्यन्न परं किंचनास्ति प्रजापतिः प्रजया संविदानस्त्रीणि ज्यो-
तींषि सचते षोडशी तस्मादुच्यते महाविष्णुमिति अथ कस्मादुच्यते ज्वलंतमिति
यत्स्वमहिम्ना सर्वान् लोकान्सर्वान्देवान्सर्वानात्मनः सर्वाणि भूतानि स्वतेजसा
ज्वलयति ज्वाल्यते ज्वालयते सविता प्रसविता दीप्तो दीपयन्दीप्यमानो ज्वल-
ज्ज्वलिता तपनो वितपन्संतपनो रोचमानः शोभनः शोभमानः कल्याणः त-
स्मादुच्यते ज्वलंतमिति अथ कस्मादुच्यते सर्वतोमुखमिति यस्मादतीन्द्रियो

६९ 69 बी

पि सर्वतः पश्यति सर्वतः शृणोति सर्वतो गच्छति सर्वत आदत्ते स सर्वगः सर्वतस्ति
ष्ठत्येकः पुरस्ताद्यदिदं बभूव यतो बभूव तस्यगोपायमानं त्रिभुवनं सांपरायेन मा
मितमहं सर्वतोमुखं तस्मादुच्यते सर्वतोमुखमिति अथ कस्मादुच्यते नृसिंह
मिति॥ यस्मात्सर्वेषां भूतानोर्यतमः श्रेष्ठतमश्च सिंहो वीर्यतमः श्रेष्ठतमश्च त
स्मान्नृसिंह आसीत्परमेश्वरो जगद्धितं वा एतद्रूपमक्षरं भवति प्रतद्विष्णुस्त
वते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः यस्योरुषु त्रिषु विक्रमणेष्वधि
क्षयंति भुवनानि विश्वा तस्मादुच्यते नृसिंहमिति अथ कस्मादुच्यते भीषणा
मिति यस्माद्यस्य रूपं दृष्ट्वा सर्वे लोकाः सर्वे देवाः सर्वाणि भूतानि भीत्या प
लायंते स्वयं यतः कुतश्चिन्न बिभेति भीषास्माद्वातः पवते भीषोदेति सू

र्यः भीषास्माद ग्निश्चेंद्रश्चमृत्युर्धावतिपंचमः तस्माद्दुच्यतेभीषणमिति अ
थकस्माद्दुच्यतेभद्रमिति यः स्वयंभद्रोभूत्वासर्वदाभद्रंददाति रोचनोरोचमा
नः शोभनः शोभमानः कल्याणः भद्रंकर्णेभिः शृणुयामदेवाभद्रंपश्येमाक्षि
भिर्यजत्राः स्थिरैरंगैस्तुष्टुवांसस्तनूभिर्व्यशेमदेवहितंयदायुः तस्माद्दु
च्यतेभद्रमिति अथकस्माद्दुच्यतेमृत्युमृत्युमिति यस्मात्स्वभक्तानांस्मृतएव
मृत्युमपमृत्युंचमारयतियआत्मदाबलदायस्यविश्वउपासते प्रशिषंयस्य
देवायस्यछायामृतंयोमृत्युमृत्युः कस्मैदेवायहविषाविधेम तस्माद्दुच्यतेमृत्यु
मृत्युमिति अथकस्माद्दुच्यतेनमामीति यस्माद्यंसर्वेदेवानमंतिमुमुक्षवो
ब्रह्मवादिनश्चप्रनूनंब्रह्मणस्पतिर्मंत्रंवदत्युक्थ्यं यस्मिन्निंद्रोवरुणोमित्रो

७०
70

अथ्येमादेवाओंकारस्यचक्रिरेतस्मादुच्यतेनमामीति अथकस्मादुच्यतेहमिति
अहमस्मिप्रथमजाऋतस्यपूर्वंदेवेभ्योअमृतस्यनाभोयोमाददातिसइदेव
मादहमन्नमन्नमदंतमद्मि अहंविश्वंभुवनमभिभुवंस्वर्णज्योतीर्यएवं
वेदेत्युपनिषत्॥तृतीयःखंडः॥३॥इत्यथर्ववेदेतापनीयेमहोपनिषद्द्वितीयास
मात्ता त्रिंशत्॥३०॥ॐदेवाहवैप्रजापतिमब्रुवन्नानुष्टुभस्यमंत्रराजस्यनारसिं
हस्यशक्तिंबीजंचनोब्रूहिभगवन्इति॥सहोवाचप्रजापतिर्मायावेषानारसिं
ही सर्वमिदंसृजतिसर्वमिदंरक्षतिसर्वमिदंसंहरतितस्मान्मायामेतां
शक्तिंविद्याद्यएतांमायाशक्तिंवेदसपाप्मानंतरतिसमृत्युंतरतिसोमृत
त्वंचगच्छतिमहतींश्रियमश्नुतेमीमांसंतेब्रह्मवादिनोवदंतिह्रस्वादीर्घा

७०

१३

प्लुता चेति यदि ह्रस्वा भवति सर्वं पाप्मानं दहत्यमृतत्वं च गच्छति यदि दीर्घा भवति महतीं
श्रियमाप्नोत्यमृतत्वं च गच्छति यदि प्लुता भवति ज्ञानवान्भवत्यमृतत्वं च गच्छति
तदेतदृषिणोक्तं निदर्शनं स ई पाहि य ऋजीषी तरुत्रः श्रियं लक्ष्मीमोपलां गं वि
कां गां षष्ठीं च या मिंद्रसेनेत्यथाहुस्तां विद्यां ब्रह्मयोनिस्वरूपां तामिहायुषे श
रणं प्रपद्ये सर्वेषामेव भूतानामाकाशः परायणं सर्वाणि ह वा इमानि भूतान्याका
शादेव जायंत आकाशादेव जातानि जीवंत्याकाशं प्रयंत्यभिसंविशंति तस्मादा
काशं बीजं विद्यात्तदेतदृषिणोक्तं निदर्शनं हंसः शुचिषद्वसुरंतरिक्षसद्धोता
वेदिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा
ऋतं बृहद्य एवं वेदेति महोपनिषत् प्रथमः खंडः १ इत्यथर्ववेदे तापनीये महो

पनिषत्समाप्तात्तीयाएकविंशत् ॥३१॥ ॐ देवाहवैप्रजापतिमब्रुवन्नानुष्टुभस्य
मंत्रराजस्यनारसिंहस्यांगंमंत्रंनोब्रूहिभगवइतिसहोवाचप्रजापतिः प्रणवंसा
वित्रीयजुर्लक्ष्मीनृसिंहगायत्रीमित्यंगानिजानीयाद्योजानीतेसोमृतत्वंचगच्छ
ति ॐमित्येतदक्षरमिदंसर्वंतस्योपव्याख्यानंभूतंभवद्भविष्यदिति सर्वमों
कारएवयच्चान्यत्त्रिकालातीतंतदप्योंकारएवसर्वंह्येतद्ब्रह्मायमात्माब्रह्मसो
यमात्माचतुष्पाज्जागरितस्थानोबहिःप्रज्ञःसप्तांगएकोनविंशतिमुखःस्थू
लभुग्वैश्वानरःप्रथमःपादःस्वप्नस्थानोंतःप्रज्ञःसप्तांगएकोनविंशतिमुखःप्रवि
विक्तभुक्तैजसोद्वितीयःपादोयत्रसुप्तोनकंचनकामंकामयतेनकंचनस्वप्नं
पश्यतितत्सुषुप्तंसुषुप्तस्थानएकीभूतःप्रज्ञानघनएवानंदमयोह्यानं

दमुकूचेतोमुखः प्राज्ञस्तृतीयपादएष सर्वेश्वरएष सर्वज्ञएषोंतर्याम्येषयोनिः सर्वस्य
प्रभवाप्ययौहिभूतानांनवहिःप्रज्ञंनांतःप्रज्ञंनोभयतःप्रज्ञंनप्रज्ञंनाप्रज्ञंनोभय
तःप्रज्ञंनप्रज्ञंनाप्रज्ञंनघनंनघनप्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमल
क्षणमचिंत्यमव्यपदेश्यमेकात्मप्रत्ययसारंप्रपंचोपशमांशिवमद्वैतंचतुर्थंम
न्यंतेसआत्मासविज्ञेयः प्रथमः खंडः ॥१॥ अथसावित्रीगायत्रीयायजुषाप्रो
क्तातयासर्वमिदंव्याप्तं ॐ घृणिरितिद्वेअक्षरे सूर्यइतित्रीण्यादित्यइतित्रीण्ये
तद्वैसावित्रस्याष्टाक्षरंपदंश्रियाभिषिक्तंयएवंवेदश्रियाहैहेवाभिच्यते तदेतदृ
चाभ्युक्तं ऋचोअक्षरेपरमेव्योमन्यस्मिन्देवाअधिविश्वेनिषेदुः यस्तंनवेद
किमृचाकरिष्यति यइत्तद्विदुस्तइमेसमासतइतिनहवाएतस्यऋचानय

जुषान सामन्नोर्थी त्तिय: सावित्री वेदेत्यों भूर्लक्ष्मीर्भुवोलक्ष्मी: स्वकालकर्णीत

७२ न्नो महालक्ष्मी: प्रचोदयात् इत्येषाह वै महालक्ष्मीर्यजुर्गायत्री चतुर्विंशत्यक्ष
72

रा भवति गायत्री वा इदं सर्वं यदिदं किंचनतस्मा यएतां महालक्ष्मीं यजुर्वेद मह

तीश्रियमश्नुते ॐ नरसिंहाय विद्महे वज्रनखाय धीमहि तन्नो सिंह: प्रचो

दयात् इत्येषाह वै नृसिंह गायत्री वेदानां देवानां विधानं भवति यएवं वेद सनि

धानवान्भवति द्वितीय: खंड: २ देवाह वै प्रजापतिमब्रुवन्नथ केर्मन्त्रै र्देव: स्तु

त: प्रीतो भवति स्वात्मानं दर्शयति तन्नो ब्रूहि भगव इति सहोवाच प्रजापति:॥

ॐ यो वै नृसिंहो देवो भगवान्यश्च ब्रह्मा तस्मै वै नमो नम: १ यो वै नृसिंहो

देवो भगवान्यश्च विष्णुस्तस्मै वै नमो नम: २ यो वै नृसिंहो देवो भगवान्यश्च ७२

महेश्वरस्तस्मैवैनमोनमः ३ योवैनृसिंहोदेवोभगवान्यश्चपुरुषस्तस्मैवैनमोनमः ४ यो
वैनृसिंहोदेवोभगवान्यश्चेश्वरस्तस्मैवैनमोनमः ५ योवैनृसिंहोदेवोभगवान्याचस
रस्वतीतस्मैवैनमोनमः ६ योवैनृसिंहोदेवोभगवान्याचश्रीस्तस्मैवैनमोनमः ७
योवैनृसिंहोदेवोभगवान्याचगौरीतस्मैवैनमोनमः ८ योवैनृसिंहोदेवोभगवा
न्याचप्रकृतिस्तस्मैवैनमोनमः ९ योवैनृसिंहोदेवोभगवान्याचविद्यातस्मैवै
नमोनमः १० योवैनृसिंहोदेवोभगवान्यश्चॐकारस्तस्मैवैनमोनमः ११ योवैनृ
सिंहोदेवोभगवान्येपंचाग्नयस्तस्मैवैनमोनमः १२ योवैनृसिंहोदेवोभगवान्याः
त[illegible]तनयस्तस्मैवैनमोनमः १३ योवैनृसिंहोदेवोभगवान्येचाष्टौवसवस्तस्मै
वैनमोनमः १४ योवैनृसिंहोदेवोभगवान्येचरुद्रास्तस्मैवैनमोनमः १५ योवै

७२

७३

नृसिंहो देवो भगवान्ये चादित्यास्तस्मै वै नमो नमः १६ यो वै नृसिंहो देवो भगवान्ये चाष्टौ ग्रहास्तस्मै वै नमो नमः १७ यो वै नृसिंहो देवो भगवान्ये चाष्टौ लोकपालास्तस्मै वै नमो नमः १८ यो वै नृसिंहो देवो भगवान्यश्च क्रोधस्तस्मै वै नमो नमः १९ यो वै नृसिंहो देवो भगवान्यश्च कालस्तस्मै वै नमो नमः २० यो वै नृसिंहो देवो भगवान्यश्च मनुस्तस्मै वै नमो नमः २१ यो वै नृसिंहो देवो भगवान्यश्च मन स्तस्मै वै नमो नमः २२ यो वै नृसिंहो देवो भगवान्यश्च मृत्युस्तस्मै वै नमो नमः २३ यो वै नृसिंहो देवो भगवान्यश्च यमस्तस्मै वै नमो नमः २४ यो वै नृसिंहो देवो भगवान्यश्चान्तकस्तस्मै वै नमो नमः २५ यो वै नृसिंहो देवो भगवान्यश्च प्राणस्तस्मै वै नमो नमः २६ यो वै नृसिंहो देवो भगवान्यश्च सूर्यस्तस्मै वै नमो नमः २७ यो वै नृसिंहो देवो भगवान्य

७२

श्च सोमस्तस्मै वै नमो नमः २८ यो वै नृसिंहो देवो भगवान्यश्च जीवस्तस्मै वै नमो नमः २९
यो वै नृसिंहो देवो भगवान्यश्च विराट् तस्मै वै नमो नमः ३० यो वै नृसिंहो देवो भगवान्
यच्च सर्वं तस्मै वै नमो नमः ३१ इति तान्प्रजापतिरब्रवीदेतैर्द्वात्रिंशन्मन्त्रैर्नित्यं देवं
स्तुवन्स्तुतो देवः प्रीतो भवति स्वात्मानं दर्शयति तस्माद्य एतैर्मन्त्रैर्नित्यं देवं स्तौति स देवं
पश्यति सोऽमृतत्वं च गच्छति य एवं वेदेति महोपनिषत्॥ तृतीयः खंडः॥३॥ इत्यथर्ववेदे
तापनीये महोपनिषच्चतुर्थी समाप्ता द्वात्रिंशदादितः ३२ देवा ह वै प्रजापतिमब्रुव
न्महाचक्रं नाम चक्रं नो ब्रूहि भगवः सार्वकामिकं मोक्षद्वारं यद्योगिन उपदिशंति स हो
वाच प्रजापतिः षडक्षरं वा एतत्सुदर्शनं महाचक्रं तस्मात्षडरं भवति षट्पत्रं चक्रं भव
ति षड्वा ऋतव ऋतुभिः संमितं मध्ये नाभिर्भवति नाभ्यां वा एते अराः प्रतिष्ठिता भवति

७४
74

मायया वा एतत्सर्वं वेष्टितं भवति नात्मानं माया स्पृशति तस्मान्मायया बहिर्वेष्टितं भवत्य
ष्टारमष्टपत्रं चक्रं भवत्यष्टाक्षरा वै गायत्री गायत्र्या संमितं भवति तस्मान्मायया बहिर्वे
ष्टितं भवति क्षेत्रं क्षेत्रं वा मायैषा संपद्यतेथ द्वादशारं द्वादशपत्रं चक्रं भवति द्वादशा
क्षरा वै जगती जगत्या संमितं भवति बहिर्मायया वेष्टितं भवत्यथ षोडशारं षोडशपत्रं
चक्रं भवति षोडशकलो वै पुरुषः पुरुष एवेदं सर्वं पुरुषेण संमितं भवति बहिर्माय
या वेष्टितं भवत्यथ द्वात्रिंशदरं द्वात्रिंशत्पत्रं चक्रं भवति द्वात्रिंशदक्षरा वा अनुष्टुब्भवत्य
नुष्टुभा संमितं भवति बहिर्मायया वेष्टितं भवत्यरैर्वा एतत्सुदर्शनं भवति वेदा वा ए
ते अराः पत्रैर्वा एतत्सर्वतः परिक्रामति छंदांसि वै पत्राणि प्रथमः खंडः १ तदेवं च
क्रं सुदर्शनं महाचक्रं तस्य मध्ये नाभ्यां तारकं भवति यदक्षरं नारसिंहमेकाक्षरं

तद्भवति षट्सुपत्रेषु षडक्षरं सुदर्शनं भवत्यष्टसुपत्रेष्वष्टाक्षरं नारायणं भवति द्वा
दशेषु पत्रेषु द्वादशाक्षरं वासुदेवं भवति षोडशेसु पत्रेषु मातृकाद्याः सबिंदुकाः षोड
शकला भवंति द्वात्रिंशत्सुपत्रेषु द्वात्रिंशदक्षरं मंत्रराजं नारसिंहमानुष्टुभं भवति त
द्वा तद्वा एतन्महाचक्रं सार्वकामिकं मोक्षद्वारं ऋङ्मयं यजुर्मयं साममयं ब्रह्ममय
ममृतमयं भवति तस्य पुरस्ताद्वसव आसते रुद्रा दक्षिणत आदित्याः पश्चाद्विश्वे
देवा उत्तरतो ब्रह्मविष्णुमहेश्वरा नाभ्यां सूर्याचंद्रमसौ पार्श्वयोस्तदेतदृचाभ्युक्तं ऋ
चो अक्षरे परमे व्योमन्यस्मिन्देवा अधिविश्वे निषेदुः यस्तन्न वेद किमृचा करिष्य
ति य एतद्विदुस्त इमे समासत इति तदेतन्महाचक्रं बालो वा युवा वा वेद स महान्भ
वति स गुरुर्भवति स सर्वेषां मंत्राणामुपदेष्टा भवत्यनुष्टुभा होमं कुर्यादनु

ष्टुभार्चनं तदेतद्रक्षोघ्नं मृत्युतारकं गुरुतो लब्धं कंठे बाहौ वा शिखायां वा बध्नीया
त्सप्तद्वीपवती भूमिर्दक्षिणार्थं नावकल्पते तस्मात्तच्छ्रद्धया यां कांचिद्द
द्यात्सा दक्षिणा च भवति २ देवा ह वै प्रजापतिमब्रुवन्नस्य आनुष्टुभस्य मंत्र
राजस्य फलं नो ब्रूहि भगव इति स होवाच प्रजापतिर्य एतं मंत्रराजं नारसिंह
मानुष्टुभं नित्यमधीते सोग्निपूतो भवति स वायुपूतो भवति स आदित्यपूतो
भवति स सोमपूतो भवति स सत्यपूतो भवति स लोकपूतो भवति स ब्रह्मपूतो भव
ति स विष्णुपूतो भवति स रुद्रपूतो भवति स वेदपूतो भवति स सर्वपूतो भव
ति स सर्वपूतो भवति य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्यमधीते स पा
प्मानं तरति स मृत्युं तरति स भ्रूणहत्यां तरति स वीरहत्यां तरति स ब्र

ब्रह्महत्यां तरति स सर्वहत्यां तरति स संसारं तरति स सर्वं तरति स सर्वं तरति ४ य एतं मं
त्रराजं नारसिंहमानुष्टुभं नित्यमधीते सोग्निं स्तंभयति स वायुं स्तंभयति स आदि
त्यं स्तंभयति स सोमं स्तंभयति स उदकं स्तंभयति स सर्वान्देवान्स्तंभयति स सर्वा
न्ग्रहान्स्तंभयति स विषं स्तंभयति स विषं स्तंभयति ५ य एतं मंत्रराजं नारसिंह
मानुष्टुभं नित्यमधीते स भूर्लोकं जयति स भुवर्लोकं जयति स स्वर्लोकं जयति
स महर्लोकं जयति स जनलोकं जयति स तपोलोकं जयति स सत्यलोकं जयति स
सर्वलोकं जयति स सर्वलोकं जयति ६ य एतं मंत्रराजं नारसिंहमानुष्टुभं नित्य
मधीते स मनुष्यानाकर्षयति स देवानाकर्षयति स नागानाकर्षयति स ग्रहाना
कर्षयति स सर्वयक्षानाकर्षयति स सर्वानाकर्षयति स सर्वानाकर्षयति ७

७६
76

यएतंमंत्रराजंनारसिंहमानुष्टुभंनित्यमधीतेसोग्निष्टोमेनयजतेसओक्थ्येनयज
तेसषोडशिनायजतेसवाजपेयेनयजतेसोतिरात्रेणायजतेसोतिरात्रेणायजतेस
आप्तोर्यामेनयजतेससर्वैःक्रतुभिर्यजते ८ यएतंमंत्रराजंनारसिंहमानुष्टु
भंनित्यमधीतेसऋचोधीतेसयजूंष्यधीतेससामान्यधीतेसोथर्वणमधीतेसों
गिरसमधीतेसशाखाअधीतेसपुराणान्यधीतेसकल्पानधीतेसगाथाअधीते
सनाराशंसीरधीतेसप्रणवमधीतेयःप्रणवमधीतेससर्वमधीते ८ अनुप
नीतशतमेकमेकेनोपनीतेनतत्सममुपनीतंशतमेकमेकेनगृहस्थेनतत्समं
गृहस्थशतमेकमेकेनवानप्रस्थेनतत्समंवानप्रस्थशतमेकमेकेनयतिना
तत्समंयतीनांतुशतंपूर्णरुद्रजापकेनतत्समंरुद्रजापकशतमेकमेकेना

थर्वशिरःशिखाध्यापकेन तत्सममथर्वशिरः शिखाध्यायीशतं मंत्रराजं जापकेनत
त्समं तद्वा एतत्परमधाम मंत्रराजाध्यापकस्य यत्र सूर्यो न तपति यत्र वायुर्न वाति यत्र
नाग्निर्दहति यत्र न मृत्युः प्रविशति यत्र न दुःखं सदानंदं परमानंदं शाश्वतं शांतं सत्सदा
शिवं ब्रह्मादिवंदितं योगिध्येयं यत्र न निवर्त्तते योगिनः तदेतदृचाभ्युक्तं तद्विष्णोः
परमं पदं सदा पश्यंति सूरयः दिवीव चक्षुराततं तद्विप्रासो विपण्यवो जागृवांसः
समिंधते विष्णोर्यत्परमं पदमिति तदेतन्निष्कामस्य भवति य एवं वेदेत्युपनिषत्
१० इत्यथर्ववेदे नृसिंहतापनीये महोपनिषत्समाप्ता पंचमा आदितस्त्रयस्त्रिंश
त् ३३ श्रीनृसिंहपूर्वतापनीयं समाप्तं ॥ अथोत्तरतापनीयं लिख्यते ॥ ॐ नमो भ
गवते श्रीमद्दिव्यलक्ष्मीनृसिंहाय नमः सान्ते ॐ भद्रं कर्णेभिः १ स्वस्ति न इंद्र

इति ऋग्द्वयं पूर्वतापनीये लिखितं ॐ शांतिः शांतिः शांतिः देवा ह वै प्रजापतिमब्रुव
न्नणोरणीयांसमिममोंकारं नो व्याचक्ष्वेति तथेत्योमित्येतदक्षरमिदं सर्वं तस्योप
व्याख्यानं भूतं भवद्भविष्यदिति सर्वमोंकार एव यच्चान्यत्त्रिकालातीतं तदप्योंका
र एव सर्वं तद्ब्रह्मायमात्मा ब्रह्म तमेतमात्मानमोमिति ब्रह्मणैकीकृत्य ब्रह्म चात्मान
मोमित्येकीकृत्य तदेतदजरममरममृतमभयमोमित्यनुभूय तस्मिन्निदं सर्वं त्रिश
रीरमारोप्य तन्मयं हि तदेवेति संहरेदोमिति तं वा एतं त्रिशरीरमात्मानं त्रिशरीरं प
रं ब्रह्मानुसंदध्यात्स्थूलत्वात्स्थूलभुक्त्वाच्च सूक्ष्मत्वात्सूक्ष्मभुक्त्वाच्चैक्यादानंदभो
गाच्च सोऽयमात्मा चतुष्पाज्जागरितस्थानः स्थूलप्रज्ञः सप्तांग एकोनविंशतिमु
खः स्थूलभुक् चतुरात्मा विश्वो वैश्वानरः प्रथमः पादः स्वप्नस्थानः सूक्ष्म

मुखश्चतुरात्मा तेजसो हिरण्यगर्भो द्वितीयपादो यत्र सुप्तो न किंचन कामं कामयते न
कंचन स्वप्नं पश्यति तत्सुषुप्तं सुषुप्तस्थान एकीभूतः प्रज्ञानघन एवानंदमयो ह्यानंदभुक्
चेतोमुखश्चतुरात्मा प्राज्ञ ईश्वरस्तृतीयः पाद एष सर्वेश्वर एष सर्वज्ञ एषोंतर्याम्येष यो
निः सर्वस्य प्रभवाप्ययौ हि भूतानां त्रयमेतत्सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्यय
मात्माथ चतुश्चतुरात्मा तुरीयावसितत्वादेकैकस्योतानुज्ञाविकल्पैस्त्रिमात्रापि
सुषुप्तं स्वप्नं मायामात्रं चिदेकरसो ह्यथायमादेशो न स्थूलप्रज्ञं न सूक्ष्मप्रज्ञं नोभय
तःप्रज्ञं न प्रज्ञं नाप्रज्ञं न प्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमलिंगमचिं
त्यमव्यपदेश्यमेकात्मप्रत्ययसारं प्रपंचोपशमं शिवं शांतमद्वैतं चतुर्थं मन्यंते स ए
वात्मा स एव विज्ञेय ईश्वरग्रासस्तुरीयस्तुरीयः प्रथमः खंडः ॥१॥ तं वा एतमात्मा

नंजाग्रदस्वप्नमसुषुप्तंस्वप्ने जाग्रतमसुषुप्तंसुषुप्ते जाग्रतमस्वप्नंतुरीये जाग्रतमस्वप्न
मसुषुप्तमभिचारिणंनित्यानंदंसदैकरसंह्येवंचक्षुषो द्रष्टाश्रोत्रस्यद्रष्टावाचोद्रष्टा
मनसोद्रष्टाबुद्धेर्द्रष्टाप्राणस्यद्रष्टातमसोद्रष्टासर्वस्यद्रष्टातमसोद्रष्टासर्वस्य
द्रष्टाततः सर्वस्मादस्मादन्योविलक्षणाश्चक्षुषःसाक्षीश्रोत्रस्यसाक्षीवाचः
साक्षीमनसःसाक्षीबुद्धेः साक्षीप्राणस्यसाक्षीतमसःसाक्षीसर्वस्यसाक्षीततोवि
क्रियोमहाचैतन्योस्मात्सर्वस्मात्प्रियतमआनंदघनंह्येवमस्मात्सर्वस्मात्पुरतः
सुविभातमेकरसमेवाजरममृतमभयंब्रह्मैवाप्यजायेवंचतुष्पादंमात्राभिरों
कारेणचैकीकुर्याज्जागरितस्थानश्चतुरात्माविश्वोवैश्वानरश्चतूरूपॐका
रएवचतूरूपोह्ययमाकारःस्थूलसूक्ष्मबीजसाक्षिभिराकाररूपैराप्तेरादि

मत्वाच्च स्थूलत्वात्सूक्ष्मत्वाद्बीजत्वात्साक्षित्वाच्चाप्नोति ह वा इदं सर्वमादिश्च भवति
य एवं वेद स्वप्नस्थानश्चतुरात्मा तैजसो हिरण्यगर्भश्चतूरूप उकार एव च तद्रूपो द्वि
यमाकारः स्थूलसूक्ष्मबीजसाक्षिभिरुकाररूपैरुत्कर्षी द्युभयत्वाद्वा स्थूलत्वात्सू
क्ष्मत्वाद्बीजत्वात्साक्षित्वाच्चोत्कर्षयति ह वै ज्ञानसंततिं समानश्च भवति य एवं वेद
सुषुप्तस्थानश्चतुरात्मा प्राज्ञ ईश्वरश्चतूरूपो मकार एव च तद्रूपो तृतीयमाकारः स्थूल
सूक्ष्मबीजसाक्षिभिर्मकाररूपैर्मितेरपीतेर्वा स्थूलत्वात्सूक्ष्मत्वाद्बीजत्वा
त्साक्षित्वाच्च मिनोति ह वा इदं सर्वमपीतिश्च भवति य एवं वेद मात्रामात्राः प्रतिमा
त्राः कृत्यादि विष्णु तुरीय ईश्वरग्रामः स्वराट् स्वयमीश्वरः स्वप्रकाशश्चतुरात्मोता
नुज्ञात्रानुज्ञाविकल्पैरेतो द्वयमात्मा यथेदं सर्वमन्तकाले कालाग्निसूर्यास्रैर

नुज्ञाताह्ययमात्मास्यसर्वस्यस्वात्मानंददातियदिसर्वमिदंदर्शयतिस्वात्मान
मेवकरोतियथातमःसवितानुज्ञैकरसोह्ययमात्माचिद्रूपएवयथादाह्यंदग्ध्वा
ग्निरविकल्पोह्ययमात्मावाङ्मनोगोचरत्वाच्चिद्रूपश्चतद्रूपॐकाररूपएवाःच
त्तद्रूपोह्ययमोंकारआनुज्ञात्रनुज्ञाविकल्पैरात्मैवनामरूपात्मकंहीदंसर्वं
तुरीयत्वाच्चिद्रूपत्वाद्वाॐतत्वादनुज्ञातृत्वादनुज्ञातत्वादनुविकल्पत्वाच्चाविक
ल्परूपंहीदंसर्वंनैवतत्रकाचनभिदास्त्यथतस्यायमादेशोमात्रेश्चतुर्थोद्योव
हार्यःप्रपंचोपशमःशिवोद्वैतॐकारआत्मैवसंविशत्यात्मनात्मानंयएवंवेदए
षवीरोनारसिंहोनानुष्टुभोमंत्रराजेनतुरीयंविद्यादेषह्यात्मानंप्रकाश
यतिसर्वसंहारसमर्थःपरिभवासहःप्रभुव्याप्तिःसदोज्ज्वलोविद्याते

त्कार्य्यहीनः स्वात्मबंधहरः सर्वदाद्वैतरहित आनंदरूपः सर्वाधिष्ठानः सन्मात्रो नि
रस्ताऽखिलाविद्यातमोमोहोहमेवेति तस्मादेवमेवममात्मानं परंब्रह्मानुसंद
ध्याद्देववीरोनृसिंह एव ॥ द्वितीयः खंडः २ तस्य ह वै प्रणवस्य या पूर्वा मात्रा सा प्र
थमः पादो भवति द्वितीया द्वितीयस्य तृतीया तृतीयस्य चतुर्थ्योतानुज्ञाविकल्परूपा
तुरीया चतुरात्मानमन्विष्य चतुर्थपादेन च तया तुरीयेणानुचिंतयन्ग्रसे
त्तस्य ह वा एतस्य प्रणवस्य या पूर्वा मात्रा पृथिव्यकारः स ऋग्भिः ऋग्वेदो ब्रह्मा
वसवो गायत्री गार्हपत्यः सा प्रथमः पादो भवति भवति च द्वितीयांतरिक्षं स उंकारः
स यजुर्भिः यजुर्वेदो विष्णुरुद्रास्त्रिष्टुप्दक्षिणाग्निः सा द्वितीयः पादो भवति भवति
च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्मबीजसाक्षिभिः सर्वेषु पादेषु चतुरात्मा

स्थूलसूक्ष्मबीजसाक्षिभिस्तृतीयाद्यो: समकार: ससामभि: सामवेदो रुद्रा
आदित्यो जगत्याहवनीय: सा तृतीय: पादो भवति भवति च सर्वेषु पादेषु चतुरा
त्मा स्थूलसूक्ष्मबीजसाक्षिभिर्यावसाने स्य चतुर्थ्यर्द्धमात्रा सा सोमलोक ओं
कार: साथर्ववेदो मंत्रैरथर्ववेद: संवर्त्तकोऽग्निर्मरुतो विराडेकऋषिर्भास्वती
स्मृता सा चतुर्थ: पादो भवति भवति च सर्वेषु पादेषु चतुरात्मा स्थूलसूक्ष्म
बीजसाक्षिभिर्मात्रामात्राप्रतिमात्राकृत्वोतानुज्ञात्रानुज्ञा विकल्परूपं चिंत
यन् यसेतङ्गोमृतोऽहुतं संविभक्त: स्फुद्ध: संविष्टो निर्विघ्नामिममस्तुतियमे
नु भूयहीदं सर्वं हृष्टास्त्वप्रपंचहीनोथ सकल: साधारोमृतमयश्चतुरात्मा
सर्वमयश्चतुरात्मा महापीठे सपरिवारं तमेतं चतु: सप्तात्मानं चतुरा

८०

त्मानंमूलाग्नावग्निरूपंप्रणवंसंदध्यात्सप्तात्मानंचतुरात्मानमाकारंब्रह्माणंना
भौसप्तात्मानंचतुरात्मानमुकारंविष्णुंहृदयेसप्तात्मानंचतुरात्मानमकारंरुद्रं
भ्रूमध्येसप्तात्मानंचतुरात्मानमोंकारंसर्वेश्वरंद्वादशांतेसप्तात्मानंचतुरात्मा
नंचतुःसप्तात्मानमानंदामृतरूपंप्रणवंषोडशांतेस्थानेदामृतेनैनांश्चतुर्द्धा
संपूज्यतथाब्रह्माणमेवविष्णुमेवरुद्रमेवविभक्तोस्त्रीनेवाविभक्तोस्त्रीनेव
लिंगरूपानेवचसंपूज्योपहारैश्चतुर्द्धापलिंगात्संहृत्यतेजसाशरीरत्रय
मवाप्यतदधिष्ठानमात्मानंसंज्वाल्यतत्तेजसाआत्मचैतन्यरूपंबलमव
लमवष्टभ्येगुरोरैक्यंसंपाद्यमहास्थूलंमहासूक्ष्मेमहासूक्ष्मंमकारेणचसं
हृत्यमात्राभिरुत्तानुज्ञात्रानुज्ञाविकल्परूपंचिंतयन्नग्रसेत॥इतीप:खं३:३

८१

तंवाएतमात्मानंपरंब्रह्मओंकारंतुरीयोंकाराग्रविद्योतमेकादशात्मानंनृसिंहंनत्वा
मितिसंहरन्ननुसंदध्यादथैतमेवात्मानमात्मानंपरमंब्रह्मओंकारंतुरीयोंका
राग्रविद्योतंप्रणवेनसंचिंत्यानुष्टुभासच्चिदानंदरूपमितिमस्तनवात्मकंसच्चिदानं
दरूपमात्मानंपरमात्मानंपरमंब्रह्मसंभाव्याहमितिआत्मानमादायमनसाब्र
ह्मणैकीकुर्य्यादनुष्टुभैवचएषएवनृपएवनृसिंहःसर्वत्रसर्वदासर्वात्मासिंहो
सोपरमेश्वरोसौहिसर्वत्रसर्वदासर्वात्मासत्सर्वमत्तिनृसिंहएवैककालएव
तुरीयएषह्येवोग्रएषएववीरएषएवमहानेषएवविष्णुःएषएवज्वलन्नेषए
वसर्वतोमुखएषएवनृसिंहएषएवभीषणएषएवभद्रएषएवमृत्युमृत्युरेष
एवनमाम्येषएवाहमेवंयोगारूढोब्रह्मण्येवानुष्टुभंसंदध्यादोंकारइति

८१

न्दितौ भ्रान्तौ कौ भवतः संस्तभ्य सिंहः स्वसुतान् गुणादीन् संयोज्य शृंगे ऋषभस्य हत्वा
॥ यस्यां स्फुरंती मसती निपीड्य संभक्ष्य सिंहेन स एष वीरः ॥ शृंगप्रोतान्पदान्दंष्ट्रा
हत्वा तानग्रसत्स्वयं नत्वा च बहुधा हृष्टान्नृसिंहः शुद्धभाक् स्वयमिति ॥ चतुर्थः
खंडः ॥४॥ अथैष एवोंकार आप्ततमार्थ आत्मन्येव नृसिंह ब्रह्मणि वर्त्तत एष
ह्येवाप्ततम एष हि साक्षी एष हि ईश्वरोऽतः सर्वगतो न हि सर्वमेष व्याप्ततम इदं सर्वं
यदयमात्मा मायामात्रमेष एवोग्र एष एव हि विष्णुरेष एव हि व्याप्ततम एष एव हि
वीर एष एव हि व्याप्ततम एष एव महानेष एव हि व्याप्ततम एष एव हि विष्णुरेष एव
हि व्याप्ततम एष एव हि ज्वलन्नेष हि व्याप्ततम एष एव हि सर्वतोमुख एष हि व्या
प्ततम एष एव हि नृसिंह एष एव हि व्याप्ततम एष एव हि भीषण एष हि व्याप्ततम

८२

एषएव हि भद्र एष ह्यव्याप्ततम एष एव हि मृत्युमृत्युरेष ह्यव्याप्ततम एष एव हि न
माम्येष ह्यव्याप्ततम एष एवाहमेष ह्यव्याप्ततम आत्मैव नृसिंहो देवो ब्रह्म भवति
य एवं वेद सोकामो निष्काम आप्तकाम अप्तकामो न तस्य प्राणा उत्क्रामंत्यत्रैव
समवनीयंते ब्रह्मैव सन्ब्रह्माप्येति अथैष एवोंकार उत्कृष्टतमाच्चात्मन्येव
नृसिंहे ब्रह्मणि वर्त्तते तस्मादेष सत्यस्वरूपो न ह्यन्यद स्त्येमेयमनात्मप्र
काशमेष ह्यस्वप्रकाशो संगोन्यत्र वीक्ष्यत आत्मनेनान्यत्र प्राप्तिरात्ममात्रं
ह्येतदुत्कृष्टमेष एवोत्कृष्ट एष एव वीर एष एवोत्कृष्ट एष एव महानेष एवोत्कृ
ष्ट एष एव विष्णुरेष एवोत्कृष्ट एष एव ज्वलन्नेष ह्येवोत्कृष्ट एष एव सर्वतोमुख
एष ह्येवोत्कृष्ट एष एव नृसिंह एष एवोत्कृष्ट एष एव भीषण एष ह्येवोत्कृष्ट ए

एवमद्वएवब्रह्यैवोत्कृष्टएवएवमृत्युमृत्युरेवह्येवोत्कृष्टएवएवनमाम्येषएवो
त्कृष्टतमएवएवाहमेषह्येवोत्कृष्टस्तस्मादात्मानमेवं जानीयादात्मैवन्नृसिं
हादेवो ब्रह्मभवति य एवं वेद सोकामो निष्काम आप्तकाम आत्मकामो न त
स्य प्राणा उत्क्रामंत्यत्रैव समवनीयंते ब्रह्मैव सन्ब्रह्माप्येत्यथैष एवमकारे
महाविभूत्यर्थी आत्मन्येवन्नृसिंहे देवे परे ब्रह्मणि वर्तते तस्मादयमनल्पो
भिन्नः स्वरूपः स्वप्रकाशो ब्रह्मैव व्याप्ततम उत्कृष्टतम एतदेव ब्रह्मापि सर्व
ज्ञं महामायं महाविभूत्येन ह्येवोग्रमेतद्धि महाविभूत्येतदेव वीरमेतद्धि महा
विभूत्येतदेव महदेतद्धि महाविभूत्येतदेव विष्णुरेतद्धि महाविभूत्येतदेव
ज्वलन्नेतद्धि महाविभूत्येतदेव सर्वतोमुखमेतद्धि महाविभूत्येतदेव

८३
83

नृसिंहमेतद्धिमहाविभूत्यैतदेवभीषणमेतद्धिमहाविभूत्यैतदेवभ
द्रमेतद्धिमहाविभूत्यैतदेवमृत्युमृत्युरेतद्धिमहाविभूत्यैतदेवनमाम्येत
द्धिमहाविभूत्यैतदेवाहमेतद्धिमहाविभूत्यैतितस्मादकारोकारमका
रात्मकमेतदाप्ततममनुत्कृष्टतमंचिन्मात्रंमहाविभूतिसच्चिदानंदमात्र
मेकरसंपरमेवब्रह्ममकारेयाजानीयादात्मैवनृसिंहोदेवः परमेवब्रह्म
भवतियएवंवेदसोकामोनिष्कामआप्तकामआत्मकामोनतस्यप्राणा
उत्क्रामंत्यत्रैवसमवनीयंतेब्रह्मैवसन्ब्रह्माप्येतीतिहप्रजापतिरुवा
च पंचमःखंडः ५ तद्देवाइममात्मानंज्ञातुमैच्छंस्तान्हासुरःपाप्मा
परिजग्रासतरोक्षतहंतेनमासुरंपाप्मानंपरिजग्रासामइतिते

८३

मेवोंकारात्र विद्योतं तुरीयात्तुरीयमात्मानमुग्रमनुग्रं वीरमवीरं महांतममहांतं
विष्णुमविष्णुं ज्वलंतमज्वलंतं सर्वतोमुखमसर्वतोमुखं नृसिंहमनृसिंहं भीष
णमभीषणं भद्रमभद्रं मृत्युमृत्युममृत्युमृत्युं नमाम्यनमाम्यहमनहं नृसिंह
मनुष्टुभैव बुबुधिरे तेभ्यो ह्यसावासुरः पाप्मा सच्चिदानंदघनं ज्योतिरभवत्त
स्मादप्यक्वकषायमिममेवोंकारात्र विद्योतं तुरीयात्तुरीयमात्मानं नृसिंहमा
नुष्टुभेव जानीयात्तस्यासुरः पाप्मा सच्चिदानंदघनं ज्योतिर्भवति तद्वा ज्यो
तिष्मत्तितीर्षवो द्वितीयाद्भयमेव पश्यंत इममेवोंकारात्र विद्योतं तुरीयात्तुरीयमा
त्मानंवै नृसिंहमनुष्टुभान्विष्य प्रणवेनैतस्मिन्नवस्थितं तेभ्यस्तज्ज्योतिरस्य
सर्वस्य पुरतः सुविभातमविभातमद्वैतमचिंत्यमलिंगं स्वप्रकाशमा

नंदघनं शून्यमभवं देवं चित्स्वप्रकाशं परमेव ब्रह्म भवति ते देवाः पुत्रैषणा
या वित्तैषणायाश्च लोकैषणायाश्च ससाधनेभ्यो व्युत्थाय निरहंकारा निरागा
निष्परिग्रहा अशिखा अयज्ञोपवीता अंधा बधिरा मुग्धाः क्लीवा मूका
उन्मत्ता इव परिवर्त्तमानाः शांता दांता उपरतास्तितिक्षवः समाहिता आ
त्मरतय आत्मक्रीडा आत्ममिथुना आत्मानंदाः प्रणवमेव परमं ब्रह्मात्म
प्रकाशं शून्यं जानंतस्तत्रैव परिसमाप्तास्तस्माद्देवानां व्रतमचरन्नोंका
रे परे ब्रह्मणि पर्य्यवसितो भवेत्स आत्मनैवात्मानं परमं ब्रह्म पश्यति॥
तदेष श्लोकः भृंगे च भृंगं संयोज्यासिं हं भृंगेषु योजयेत् भृंगाभ्यां भृंग
माबध्य त्रया देवा उपासते इति॥ षष्ठः खंडः ६ देवा ह वै प्रजापतिमब्रुव

न्मह्य एवं नो भगवन् विज्ञापय त्विति तथेत्यजरत्वादमरत्वादजरत्वादमृतत्वादभय
त्वादशोकत्वादमोहत्वादनशनायत्वादपिपासात्वादद्वैतत्वाच्चाकारेणेममात्मानम
न्विष्योत्कृष्टत्वादुत्पादकत्वादुत्प्रवेष्टृत्वादुत्थापयितृत्वादुद्द्रष्टृत्वादुत्कर्तृत्वादुत्
पथवारकत्वादुद्ग्रासकत्वादुद्भ्रांतकत्वादुत्तीर्णविकृतित्वाच्चोंकारेण परमं सिंह
मन्विष्याकारमिममात्मानमुकारपूर्वार्द्धमात्रामाकृष्य सिंहीकृत्योत्तरार्द्धेन तं सिंह
माकृष्य महत्त्वान्महस्त्वान्मानत्वान्मुक्तत्वान्महादेवत्वान्महेश्वरत्वान्महासत्त्वा
न्महाचित्त्वान्महानंदत्वान्महाप्रभुत्वान्मकारार्धेनार्धेनात्मनैकीकृत्याऽशरीरो
निरिंद्रियोऽप्राणोऽतमाः सच्चिदानंदमात्रः स स्वराड्भवति य एवं वेद कस्त्वमिति
हमिति होवाचैवमेवेदं सर्वं तस्मादहमिति सर्वाभिधानं तस्यादिरयमकारः

सर्व एव भवति सर्वं ह्ययमात्मायं सर्वं तिरोहितेन हीदं सर्वं निरात्मकमात्मैवेदं सर्वं त
स्मात्सर्वात्मकेनाकारेण सर्वात्मकमात्मानमन्विच्छेद्ब्रह्मैवेदं सर्वं सच्चिदानंदरूपं स
च्चिदानंदरूपमिदं सर्वं सद्धीदं सर्वं तत्सदिति चिद्धीदं सर्वं प्रकाशते प्रकाशते चे
ति किं सदितीदमिदं नेत्यनुभूतिरिति कोषीतकीयमियं नेत्यवचनेनैवानुभवं
नुवाचैवमेव चिदानंदावथ वचनेनैवानुभवंनुवाच सर्वमन्यद्दविसपरमआ
नंदस्तस्य ब्रह्मणो नाम ब्रह्मेति तस्यांत्योयमकारः स एव भवति तस्मान्मकारे
ण परमं ब्रह्मान्विच्छेत्किमिदमेवमित्योमित्येवाहा विचिकित्संस्तस्मादका
रेणोममात्मानमन्विष्यमकारेण ब्रह्मणा संदध्यादकारेण विचिकित्संनेश
रीरोनिरिंद्रियोप्राणोतमाः सच्चिदानंदमात्रः स्वराड्भवति य एवं वेद ब्रह्मैवेदं

सर्वममृतत्वादुग्रत्वाद्वीरत्वान्महत्त्वाद्विष्णुत्वाज्ज्वलत्वात्सर्वतोमुखत्वान्नृसिंहत्वा
द्भीषणत्वाद्भद्रत्वान्मृत्युमृत्युत्वान्नमामित्वादहंत्वादिति सततं ह्युत्तरूत्वोग्रत्वान्म
हत्वाद्वीरत्वात्पुनः पुनरहंत्वादिति तस्मादकारेण परमं ब्रह्माप्निविष्णुमकारेण मन
श्चाद्यविकारं मनन आदिसाक्षिणामन्विद्धि स य देतत्सर्वमुपेक्षते तं त देतत्सर्वमस्मिन्प्रवि
शति स यदा प्रबुध्येत तदेतत्सर्वमस्माद्देवा तिष्ठति स एतं सर्वं निगृह्य प्रत्यू   द्य
संपीड्य संत्वात्य संमद्य त्वात्मामेषादात्युग्रो ति वीरो ति महानति विष्णु
रति ज्वलन्नति सर्वतोमुखो तिनृसिंहोति भीषणो ति भद्रोति मृत्युरति न
माम्यहंभूत्वा स्वे महिम्नि सदा समासते तस्मादेनं मकारार्धेन परेण ब्रह्म
लोके की कुर्यादुकारेणाविचिकित्सां न शरीरे निरिंद्रियोप्राणो तमाः स

च्चिदानंदमात्रः स स्वराड्भवति य एवं वेद तदेष श्लोकः ॥ भृंगं भृंगाद्धिमाकृष्य भृंगेना
नेन योजयेत् भृंगमेनं परे भृंगे तमेनं नापि योजयेत् सप्तमः खंडः ७ अथ तु
रीयेणोतश्च प्रोतश्च ह्ययमात्मा सिंहोस्मिन्निदं सिंहोस्मिन्निदं सर्वमयं हि सर्वात्मायं
हि सर्वमनेवोतो द्वयो ह्ययमात्मैव केवल एवाविकलो न हि वस्तु सद्वयं ह्येतेनैव सद्घनो
यं चिद्घन आनंदघन एकरसोऽव्यवहार्यः केन चाद्वितीयः ॐ तश्च प्रोतश्चैष ॐकार एवं
नेवमिति पृष्ट ॐमित्येहं ॐकारो वागेवेदं सर्वं न ह्यशब्दमिवेहास्ति चिन्मयो ह्यय
मोंकारश्चिन्मयमिदं सर्वं तस्मात्परमेश्वर एवैकमेव तद्भवत्येतदमृतमभ
यमेतद्ब्रह्माभयं हि वै ब्रह्म भवति य एवं वेदेति रहस्यमनुज्ञातं ह्ययमात्मा एष
ह्यस्य सर्वस्य स्वात्मानमनुजानाति न हीदं सर्वं स्वत आत्मवन्न ह्ययमोतो

नानुज्ञातासंगत्वादविकारित्वादसत्त्वादज्ञस्यानुज्ञातोह्ययमोंकारः ॐमितिह्य
नुजानातिवाग्वाॐकारोवागेवेदंसर्वंह्यनुजानातिचिन्मयोह्ययमोंकारश्चिद्धी
दंसर्वंनिरात्मकमात्मसात्करोतितस्मात्परमेश्वरएवैकमेवतद्भवत्येतदमृतमभ
यमेतद्ब्रह्माभयंवैब्रह्माभयंहिवैब्रह्मभवतियएवंवेदेतिरहस्यमनुज्ञैकरसो
ह्ययमात्माप्रज्ञानघनएवायंयस्मात्सर्वस्मात्पुरतःसुविभातोतश्चिद्घनएवनह्य
यमोतोनानुज्ञातआत्माहीदंसर्वमसदेवानुज्ञैकरसोह्ययमोंकारः ॐमितिह्ये
वानुजानातिवाग्वाॐकारोवागेवह्यनुजानातिचिन्मयोह्ययमोंकारश्चिदेवह्य
नुजानातितस्मात्परमेश्वरएवैकमेवतद्भवत्येतदमृतमभयमेतद्ब्रह्माभयंवैब्र
ह्माभयंहिवैब्रह्मभवतियएवंवेदेतिरहस्यमविकल्पोह्ययमात्माद्वितीयत्वा

८७

87

द। विकल्पो ह्ययमोंकारोऽद्वितीयत्वादेव चिन्मयो ह्ययमोंकारस्तस्मात्परमेश्वर एवैकमे
वैतद्भवत्यविकल्पो नाविकल्पोऽपि नात्र काचन भिदास्ति नैवात्र काचन भिदास्त्यत्र
भिदामिव मन्यमानः शतधा सहस्रधा भिन्नो मृत्योर्मृत्युमाप्नोति तदेतदद्वयं स्वप्र
काशं महानंदमात्मैवैतदमृतमभयमेतद्ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्म भवति
य एवं वेदेति रहस्यं॥ अष्टमः खंडः ८ देवा ह वै प्रजापतिमब्रुवन्भूयमेव नो भग
वन्नोंकारमात्मानमुपदिशेति तथेत्युपद्रष्टानुमंतैष आत्मा सिंहश्चिद्रूप ए
वाविकारो ह्युपलब्धा सर्वत्र न ह्यस्ति द्वैतसिद्धिरात्मैव सिद्धोऽद्वितीयो मायया
ह्यन्यदिव स वा एष आत्मा पर एवैषैष सर्वं तथा हि प्राज्ञः सैषा विद्या जगत्स
र्वमात्मा परमात्मैव स्वप्रकाशोऽप्यविषयज्ञानत्वाज्ज्ञानेनैव ह्यत्र न

८७

जानात्यनुभूतेर्मायाचतमोनुरूपानुभूतेस्तदेतज्जडंमोहात्मकमनंतंस्वछ
मिदंस्वरूपमस्याव्यंजिकानित्यनिवृत्ताविमूढैरात्मैवद्रष्टास्यात्सत्वमत्त्वंचदर्शयति
सिद्धत्वासिद्धत्वाभ्यांस्वतंत्रास्वतंत्रेनसैषावटबीजसामान्यवदनेकवटशक्तिरेकैव
तद्यथावटबीजसामान्यमेकमनेकान्स्वाव्यतिरिक्तान्वटान्स्वबीजानुत्पाद्यतत्रचात्र
चसंपूर्णासंतिष्ठत्येवमेवैषामायास्वाव्यतिरिक्तानिपरिपूर्णानिक्षेत्राणिदर्शयित्वाजी
वेशावाभासेनकरोतिमायाचाविद्याचस्वयमेवभवतिसैषाचित्रा [illegible] सुदृढाबह्वंकुरा
स्वयंगुणाभित्तांकुरेष्वपिगुणाभिन्नासर्वत्रब्रह्मविष्णुशिवरूपिणीचैतन्यदीप्ता
तस्मादात्मन्येवत्रैविध्यंसर्वत्रयोनित्वमप्याधि [illegible] मंताजीवोनियंतेश्वरःसचा
हंमानीहिरण्यगर्भस्वरूपईश्वरवद्व्यक्तचैतन्यःसर्वगोह्येषईश्वरःक्रियाज्ञा

८८

नात्मा सर्वं सर्वमयं सर्वे जीवाः सर्वमयाः सर्वावस्थासु तथाप्यवस्थाः सर्वा एव तथा
भूतानीन्द्रियाणि विराजं देवताः कोशांश्च सृष्ट्वा प्रविश्यामूढो मूढ इव व्यवहरन्ना
स्ते मायया एव तस्माद् हृदय एवायमात्मा सन्मात्रो नित्यः शुद्धो बुद्धः सत्यो मुक्तो निरंज
नो विभुरद्वय आत्मानंदः परः प्रत्यगेकरसः प्रमाणैरेतैरवगतः सत्तामात्रं हीदं सर्वं
सदेव पुरस्तात् सिद्धं हि ब्रह्म न ह्यत्र किंचनानुभूयते नाविद्यानुभवात्मनि स्व
प्रकाशे सर्वसाक्षिण्यविक्रिये पश्यते हापि सन्मात्रमसदन्यत् सत्यं हीत्थं पुरस्ता
द्योतिस्त्वात्मस्थमानंदचितघनं सिद्धं तद्धि हृदि शानो ब्रह्मान्यदपि सर्वं सर्वगं स
र्वमत एव शुद्धो बाह्यस्वरूपो शुद्धः सुखरूप आत्मा न हीदं निरात्मकं ह्येतमपि
नात्मा पुरतो हि सिद्धो न हीदं सर्वं कदा हि चिदात्मा हि स्वमहिमस्थो निरपे

८८

दृग् एक एव साक्षी स्वप्रकाशः किं तन्निरात्मकमात्मनोत्र ह्येव न विचिकित्स्यमेतद्धी
दं सर्वं साधयति इत्याद्युः साक्ष्य विक्रियः सिद्धो निरवद्यो बाह्यान्तरवीक्षणात्सु क्लिस्प
ष्टस्तमसः पुरस्ताद्भूत्यै एव दृष्टो हृष्टो वेति दृष्टो व्यवहार्योप्यल्पो नल्पः साक्ष्य विरोधो
नान्योऽस्त्युखदुःखो द्वय परमात्मा सर्वज्ञो नंतो भिन्नो द्वयः सर्वदा संवित्तिर्मायया नासं
वित्तिर्मायया नासंवित्तिः स्वप्रकाशो यूयमेव दृष्टाः किमद्वयेन द्वितीयमेव न यूयमेव
ब्रूह्येव भगवन्निति ते देवा ऊचुर्यूयमेव दृश्यथ चिन्मात्रो त्मज्ञो सङ्गो ह्ययमात्मातो यू
यमेव स्वप्रकाश इदं हि सत्तां चिन्मयत्वाद्यूयमेवेनेति होचुर्हन्त संगा वयमिति हो
चुः कथं पश्यंतीति होवाच न वयं विद्म इति होचुस्ततो यूयमेव स्वप्रकाशा इति होवाच
सत्सं चिन्मया एती हि पुरस्तात्सुविभातमव्यवहार्यमेवाद्वयं ज्ञातो वैषा विज्ञातो वि

दिता विदितात्पर इति होचुः स होवाच तद्वा एतद्ब्रह्माद्वयं बृहत्त्वान्नित्यं शुद्धं बुद्धं मुक्तं
सत्यं सूक्ष्मं परिपूर्णमद्वयं सदानंदं चिन्मात्रमात्मैवाव्यवहार्यं केन च न तदेतदात्मा
नमात्मेत्यपश्यंतः पश्यत तदेतत्सत्यमात्मा ब्रह्मैवात्र ह्येवाविचिकित्समित्योंसत्यं
तदेतत्पंडिता एव पश्यंति तदशब्दमस्पर्शमरूपमरसमगंधमव्यक्तमयमनादात
व्यमगंतव्यमविसर्जयितव्यमनानंदयितव्यममंतव्यमबोद्धव्यमनहंकर्तव्य
मचेतयितव्यमप्राणयितव्यमनपानयितव्यमनिंद्रियमविषयमकरणमल
क्षणमसंगमगुणमविक्रियमव्यपदेश्यमसत्त्वमरजस्कमतमस्कमजम
मायमथोपनिषदमेव तु विभातं सकृद्विभातं पुरतोस्मात्सर्वस्मात्सुविभात
मद्वयं पश्यताहं सः सोहमिति स होवाच किमेष दृष्टो दृष्टो वेति दृष्टो विदिता

विदितात्पर इति होचुः कैषा कथमिति होचुः किं तेन किंचनेति होचुरेवमाश्चर्यरूपा
इति न चेत्याहो मित्यनुजानीध्वं ब्रूतेनमिति ज्ञाता ज्ञातश्चेति होचुर्न चैवमिति होचु
ब्रूते वैनमात्मसिद्धमिति होवाच पश्याम एवं भगवन्न च वयं पश्यामो नेव वयं दृकु
शा नुमो नमस्ते भगवन्प्रसीदेति होवाच कैषानुज्ञैत्येष एवात्मेति होवाच ते होचुर्न
मस्तुभ्यं वयं त इतीति ह प्रजापतिर्देवाननुशशासानुशशासेति तदेष श्लोकः ॥ ओं
तमेतेन जानीयादनुज्ञातारसांतरं अनुज्ञामद्वयं लब्ध्वा उपद्रष्टारमाव्रजेदिति
नवमः खंडः ॥९॥ इत्यथर्ववेदोपनिषत्सु नृसिंहतापनीया व्याख्या नृसिंहोत्तर
तापनीया समाप्ता चेतु त्रिंशत् ॥३४॥ अथ वल्लीभ्यो नमः ओं उशन ह वै वाज
श्रवसः सर्ववेदसं ददौ तस्य ह नाचिकेता नाम पुत्र आस तं ह कुमारं संतं द

क्षिणासु नीयमानासु श्रद्धाविवेश सोऽमन्यत पीतोदका जग्धतृणा दुग्धदोहा निरि
न्द्रियाः आनंदा नाम ते लोकास्तान्स गच्छति ता ददत् स होवाच पितरं तात कस्मै मां दास्यसि
इति कस्मै मां दास्यसीति द्वितीयं तृतीयं तं होवाच मृत्यवे त्वा ददामीति बहूनामे
मि प्रथमो बहूनामेमि मध्यमः किंस्विद्यमस्य कर्तव्यं यन्मयाद्य करिष्यति ॥ इति
अनुपश्य यथा पूर्वे प्रतिपश्य तथापरे सस्यमिव मर्त्यः पश्यति सस्य पच्यते मेव
जायते पुनः वैश्वानरः प्रविशत्यतिथिर्ब्राह्मणो गृहान् तस्यैतां शांतिं कुर्व
ति हर वैवस्वतोदकं आशाप्रतीक्षे संगतं सूनृतां चेष्टापूर्ते पुत्रपशूंश्च सर्वान् ए
तद्वृंक्ते पुरुषस्याल्पमेधसो यस्यानश्नन्वसति ब्राह्मणो गृहे तिस्रो रात्रीर्य
दवात्सीर्गृहे मे अनश्नन् ब्रह्मन्नतिथिर्नमस्यः नमस्तेऽस्तु ब्रह्मन्स्व

स्ति मेस्तु तस्मात्प्रति त्रीन्वरान्वृणीष्व शांतसंकल्पः सुमना यथा स्याद्वीतमन्युर्गौतमो
माभिमृत्यो॥ त्वत्प्रसृष्टं माभिवदेत्प्रतीत एतत्त्रयाणां प्रथमं वरं वृणे॥ यथा पुरस्ता
द्भवितीप्रतीत औद्दालकिरारुणिर्मत्प्रसृष्टः सुखं रात्रीः शयिता वीतमन्युस्त्वां द
दृशिवान्मृत्युमुखात्प्रमुक्तं स्वर्गे लोके न भयं किंचनास्ति न तत्र त्वं न जरया बि
भेति॥ उभे तीर्त्वा अशनायापिपासे शोकातिगो मोदते स्वर्गलोके स त्वमग्निं स्वर्ग
मध्येषि मृत्यो प्रब्रूहि तं श्रद्दधानाय मह्यं स्वर्गलोका अमृतत्वं भजंत एतद्द्वि
तीयेन वृणे वरेण॥ प्रते ब्रवीमि तदु मे निबोध स्वर्ग्यमग्निं नचिकेतः प्रजान
न् अनंतलोकाप्तिमथो प्रतिष्ठां विद्धि त्वमेनं निहितं गुहायां लोकादिम
ग्निं तमुवाच तस्मै या इष्टका यावतीर्वा यथा वा स चापि तत्प्रत्यवदद्यथोक्त

९९

९१

मथास्य मृत्युः पुनराह तुष्टः तमब्रवीत्प्रीयमाणो महात्मा वरं तवेहाद्य ददामि
भूयः तवैव नाम्ना भविताय मग्निः स्रुकांचेमामनेकरूपां गृहाण त्रिणाचिके
तस्त्रिभिरेत्य संधिं त्रिकर्मकृत्तरति जन्ममृत्यु ब्रह्मयज्ञं देवमीड्यं विदित्वा नि
चाय्येमां शांतिमत्यंतमेति त्रिणाचिकेतस्त्रयमेतद्विदित्वा य एवं विद्वांश्चिनुते
नाचिकेतं॥ समृत्युपाशात्पुरतः प्रणोद्य शोकातिगो मोदते स्वर्गलोके एवते ग्निना
चिकेतः स्वर्ग्यो यमवृणीथा द्वितीयेन वरेण एतमग्निं तवैव प्रवक्ष्यंति जनास
स्तृतीयं वरं नचिकेतो वृणीष्व येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायम
स्तीति चैके एतद्विद्यामनुशिष्टस्त्वयाहं वराणामेष वरस्तृतीयः देवैरत्रा
पि विचिकित्सितं पुरा न हि सुविज्ञेयमणुरेष धर्मः॥ अन्यं वरं नाचिकेतो

९९

वृणीष्व मामोपरोत्सीरति मासृजैनं देवैरत्रापि विचिकित्सितं किल त्वं च मृत्यो य
न्न सुविज्ञेयमात्थ वक्ता चास्य त्वादृगन्यो न लभ्यो नान्यो वरस्तुल्य एतस्य कश्चित्
शतायुषः पुत्रपौत्रान्वृणीष्व बहून्पशून्हस्तिहिरण्यमश्वान् भूमेर्महदायतनं वृ
णीष्व स्वयं च जीव शरदो यावदिच्छसि॥ एतत्तुल्यं यदि मन्यसे वरं वृणीष्व वित्तं चिर
जीविकां च महाभूमौ नचिकेतस्त्वमेधि कामानां त्वा कामभाजं करोमि ये ये का
मा दुर्लभा मर्त्यलोके सर्वान्कामांश्छन्दतः प्रार्थयस्व इमा रामाः सरथाः सतूर्या
न हीदृशा लंभनीया मनुष्यैः आभिर्मत्प्रत्ताभिः परिचारयस्व नचिकेतो मरणं
मानुप्राक्षीः श्वोभावा मर्त्यस्य यदन्तकैतत्सर्वेन्द्रियाणां जरयन्ति तेजः अपि स
र्वं जीवितमल्पमेव तवैव वाहास्तव नृत्यगीते नाऽवित्तेन तर्पणीयो मनुष्यो ल

स्यामहे वित्तमद्राक्ष्म चेत्त्वां जीविष्यामो यावदीशिष्यसित्वं वरस्तु मे वरणीयः स ए
व॥ अजीर्यताममृतानामुपेत्य जीर्य्यन्मर्त्यः क्वधःस्थः प्रजानन् अभिध्यायन्वर्णर
तिप्रमोदानतिदीर्घे जीविते को रमेत॥ यस्मिन्निदं विचिकित्संति मृत्यो यत्सांपरा
ये महति ब्रूहि नस्तत यो यं वरो गूढमनुप्रविष्टो नान्यं तस्मान्नचिकेता वृणीते॥ इ
ति प्रथमा वल्ली॥ अन्यच्छ्रेयोन्यदुतैव प्रेयस्ते उभे नानार्थे पुरुषं सिनीतः॥ तयोः
श्रेय आददानस्य साधु भवति हीयतेर्थाद्यउ प्रेयो वृणीते श्रेयश्च प्रेयश्च मनुष्यमेत
स्तौ संपरीत्य विविनक्ति धीरः श्रेयो हि धीरो अभिप्रेयसो वृणीते प्रेयो मन्दो योग
क्षेमाद्वृणीते स त्वं प्रियान्प्रियरूपांश्च कामानभिध्यायन्नचिकेतोत्यस्राक्षीः
नैतां सृकां वित्तमयीमवाप्तो यस्यां मज्जंति बहवो मनुष्याः दूरमेते विपरी वि

षूचीअविद्यायाचविद्येतिज्ञाता विद्याभीप्सितंनाचिकेतसंमन्येनत्वाकामाबहवोलोलु
पंते अविद्यायामंतरेवर्तमानाःस्वयंधीराःपंडितंमन्यमानाः दंद्रम्यमानाःपरियंति
मूढा अंधेनैवनीयमानायथांधाः नसांपरायःप्रतिभातिबालंप्रमाद्यंतंवित्तमोहेन
मूढं अयंलोकोनास्तिपरइतिमानी पुनःपुनर्वशमापद्यतेमे श्रवणायापिबहुभि
र्योनलभ्यःशृण्वंतोपिबहवोयंनविद्युः आचार्योस्यावक्ताकुशलोस्यलब्धीआ
श्चर्योज्ञाताकुशलानुशिष्टः नतरेणावरेणप्रोक्तएषसुविज्ञेयोबहुधाचिंत्यमानः॥
अनन्यप्रोक्तेगतिरत्रनास्त्यणीयान्ह्यतर्क्यमनुप्रमाणात् नैषातर्केणमतिरा
पनेयाप्रोक्तान्येनैवसुज्ञानायप्रेष्ठ यांत्वमापःसत्यधृतिर्वतासित्वादृङ्नोभूयान्नचि
केतःप्रष्टा जानाम्यहंशेवधिरित्यनित्यं नह्यध्रुवैःप्राप्यतेहिध्रुवंतत् ततोमयाना

२३

93

चिकेतश्चितोग्निर् नित्यैर्द्रव्यैः प्राप्तवान् अस्मि नित्यं कामस्याप्तिं जगतः प्रतिष्ठां क्रतोरनं
त्यमभयस्यपारं स्तोममहदुरुगायंप्रतिष्ठांदृष्ट्वाधृत्याधीरोपनचिकेतोत्यस्राक्षीः
तंदुर्दर्शंगूढमनुप्रविष्टंगुहाहितंगह्वरेष्ठंपुराणं अध्यात्मयोगाधिगमेनदेवं
मत्वाधीरोहर्षशोकौजहाति एतच्छ्रुत्वासंपरिगृह्यमर्त्यः प्रवृह्यधर्म्यमणुमेत
माप्य समोदतेमोदनीयंहिलब्ध्वाविवृतंसद्मनचिकेतसंमन्ये अन्यत्रधर्मादन्य
त्राधर्मादन्यत्रास्मात्कृताकृतात् अन्यत्रभूताच्चभव्याच्चयत्तत्पश्यसितद्वद सर्ववे
दायत्पदमामनंतितपांसिसर्वाणिचयद्वदंति यदिच्छंतोब्रह्मचर्यंचरंतित
त्तेपदंसंग्रहेणब्रवीम्योमित्येतत् एतद्ध्येवाक्षरंब्रह्मएतद्ध्येवाक्षरंपरं एतद्ध्येवा
क्षरंज्ञात्वायोयदिच्छतितस्यतत् एतदालंबनंश्रेष्ठमेतदालंबनंपरं एतदालं

२३

वनं ज्ञात्वा ब्रह्मलोके महीयते न जायते म्रियते वा कदाचिन्नायं कुतश्चिन्न बभूव क
श्चित् अजो नित्यः शाश्वतोयं पुराणो न हन्यते हन्यमाने शरीरे हंता चेन्मन्यते हंतुं हत
श्चेन्मन्यते हतं उभौ तौ न विजानीतो नायं हंति न हन्यते अणोरणीयान्महतो महीया
नात्मास्य जंतोर्निहितो गुहायां तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमा
नमात्मनः आसीनो दूरं व्रजति शयानो याति सर्वतः कस्तं मदामदं देवं मदन्यो ज्ञा
तुमर्हसि अशरीरं शरीरेष्वनवस्थेष्ववस्थितं महांतं विभुमात्मानं मत्वा धी
रो न शोचति नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणु
ते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वां नाविरतो दुश्चरितान्नाशांतो ना
समाहितः नाशांतमनसो वापि प्रज्ञानेनैनमाप्नुयात् यस्य च ब्रह्म च क्षत्रं च उभे

मेभवतओदनः मृत्युर्यस्योपसेचनंकइत्थावेदयत्रसः॥३इतिद्वितीयावल्ली २ ऋतं
पिबंतौसुकृतस्यलोकेगुहांप्रविष्टोपरमेपरार्धे॥छायातपौब्रह्मविदोवदंतिपंचा
ग्नयोयेचत्रिणाचिकेताः यःसेतुरीजानानामक्षरंब्रह्मयत्परं अभयंतिती
र्षतांपारंनाचिकेतंशकेमहि आत्मानंरथिनंविद्धिशरीरंरथमेवच बुद्धिंतुसा
रथिंविद्धिमनःप्रग्रहमेवच इंद्रियाणिहयानाहुर्विषयांस्तेसुगोचरान् आ
त्मेंद्रियमनोयुक्तंभोक्तेत्याहुर्मनीषिणः यस्त्वविज्ञानवान्भवत्ययुक्तेनमन
सासदा तस्येंद्रियाण्यवश्यानिदुष्टाश्वाइवसारथेः यस्तुविज्ञानवान्भ
वतियुक्तेनमनसासदा तस्येंद्रियाणिवश्यानिसदश्वाइवसारथेः॥य
स्तुविज्ञानवान्भवत्यमनस्कःसदाशुचिः नसतत्पदमाप्नोतिसंसारं

चाधिगच्छति॥ यस्तु विज्ञानवान्भवति समनस्कः सदाशुचिः सतु तत्पदमाप्नो
ति यस्माद्भूयो न जायते विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः सोध्वनः परमा
प्नोति तद्विष्णोः परमंपदं इंद्रियेभ्यः परा ह्यर्था अर्थेभ्यश्च परं मनः मनसस्तु परा
बुद्धिर्बुद्धेरात्मा महान्परः महतः परमव्यक्तमव्यक्तात्पुरुषः परः पुरुषान्न परं
किंचित्सा काष्ठा सा परा गतिः एषु सर्वेषु भूतेषु गूढात्मा न प्रकाशते दृश्यते त्व
ग्र्यया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः यच्छेद्वाङ्मनसी प्राज्ञस्तद्यच्छेद् ज्ञान आ
त्मनि ज्ञानमात्मनि महति तद्यच्छेच्छांत आत्मनि उत्तिष्ठ जाग्रत प्राप्य वरा
न्निबोधत क्षुरस्य धारा निशिता दुरत्यया दुर्गं पथस्तत्कवयो वदंति अशब्द
मस्पर्शमरूपमव्ययं तथा रसं नित्यमगंधवच्च यत् अनाद्यनंतं महतः परं

धुवं निचाय्य तं मृत्युमुखात्प्रमुच्यते नाचिकेतमुपाख्यानं मृत्युप्रोक्तं सनातनं उ
क्त्वा श्रुत्वा च मेधावी ब्रह्मलोके महीयते य इमं परमं गुह्यं श्रावयेद्ब्रह्मसंसदि प्र
यतः श्राद्धकाले वा तदानंत्याय कल्पते तदानंत्याय कल्पत इति तृतीया वल्ली
॥३॥ इत्यथर्ववेदोपनिषत्सु कठवल्ल्याख्यायां पूर्ववल्ली समाप्ता आदितः पं
चविंशति ॥२५॥ अथोत्तरवल्ली लिख्यते ॐ पराञ्चि खानि व्यतृणत्स्वयंभू त
स्मात्पराङ्पश्यति नांतरात्मन् कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षु
रमृतत्वमिच्छन् पराचः कामाननुयांति बालास्ते मृत्योर्यांति विततस्य पाशं
अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयंते येन रूपं रसं गंध
शब्दस्पर्शांश्च मैथुनान् एतेनैव विजानाति किमत्र परिशिष्यते एतद्वै तत् ॥

स्वप्नांतं जागरितांतं चोभौ येनानुपश्यति महांतं विभुमात्मानं मत्वा धीरो न शोचति॥
य इमं मधुदं वेदात्मानं जीवमंतिकात्॥ ईशानं भूतभव्यस्य न ततो विजुगुप्सते ए
तद्वै तत्॥ यः पूर्वं तपसो जातमद्भ्यः पूर्वमजायत गुहां प्रविश्य तिष्ठंतं यो भूतेभिर्व्यप
श्यत एतद्वै तत्॥ या प्राणेन संभवत्यदितिर्देवतामयी गुहां प्रविश्य तिष्ठंती
या भूतेभिरजायत एतद्वै तत् अरण्योर्निहितो जातवेदा गर्भ इव सुभृतो गर्भि
णीभिः दिवे दिव ईड्यो जागृवद्भिर्हविष्मद्भिर्मनुष्येभिरग्निः एतद्वै तत् यतश्चो
देति सूर्योऽस्तं यत्र च गच्छति॥ तं देवाः सर्वे अर्पितास्तदु नात्येति कश्चन एतद्वै तत्
यदेवेह तदमुत्र यदमुत्र तदन्विह मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति
मनसैवेदमाप्तव्यं नेह नानास्ति किंचन मृत्योः स मृत्युं गच्छति य इह नानेव

२६

९८

पश्यति अंगुष्ठमात्रः पुरुषो मध्य आत्मनि तिष्ठति ईशानो भूतभव्यस्य न ततो विजु
गुप्सते एतद्वै तत् अंगुष्ठमात्रः पुरुषो ज्योतिरेवाधूमकः ईशानो भूतभव्यस्य
स एवाद्य स श्विवाच एतद्वै तत् यथोदकं दुर्गे वृष्टं पर्वतेषु विधावति एवं धर्मान्
पृथक् पश्यंस्तानेवानुविधावति ॥ यथोदकं शुद्धे शुद्धमासिक्तं तादृगेव भवति ॥
एवं मुनेर्विजानत आत्मा भवति गोतमेति चतुर्थी वल्ली ॥४॥ पुरमेकादशद्वार
मजस्यावक्रचेतसः अनुष्ठाय न शोचति विमुक्तश्च विमुच्यते एतद्वै तत् हंसः
शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमस
दब्जा गोजा ऋतजा अद्रिजा ऋतं बृहत् ऊर्ध्वं प्राणमुन्नयत्यपानं प्रत्यगस्यति ॥
मध्ये वामनमासीनं विश्वेदेवा उपासते ॥ अस्य विस्रंसमानस्य शरीरस्थस्य दे

२६

हिनः देहाद्विमुच्यमानस्य किमत्र परिशिष्यते एतद्वैतत् न प्राणेन नापानेन म
र्त्यो जीवति कश्चन इतरेण तु जीवंति यस्मिन्नेतावुपाश्रितौ हंत त इदं प्रवक्ष्यामि
गुह्यं ब्रह्म सनातनं यथा च मरणं प्राप्य आत्मा भवति गौतम योनिमन्ये प्रपद्यंते
शरीरत्वाय देहिनः स्थाणुमन्येनुसंयंति यथाकर्म यथाश्रुतं य एष सुप्तेषु जागर्ति
कामं कामं पुरुषो निर्मिमाणः तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते तस्मिंल्लोकाः
श्रिताः सर्वे तदु नात्येति कश्चन एतद्वैतत् अग्निर्यथैको भुवनं प्रविष्टो रूपं रू
पं प्रतिरूपो बभूव एकस्तथा सर्वभूतांतरात्मा रूपं रूपं प्रतिरूपो बहिश्च ॥ वायुर्य
थैको भुवनं प्रविष्टो रूपं रूपं प्रतिरूपो बभूव ॥ एकस्तथा सर्वभूतांतरात्मा रूपं रू
पं प्रतिरूपो बहिश्च सूर्यो यथा सर्वलोकस्य चक्षुर्न लिप्यते चाक्षुषैर्बाह्यदोषैः ॥

९६ 97

एकस्तथासर्वभूतांतरात्मा न लिप्यते लोकदुःखेनबाह्यः एको वशी सर्वभूतां
तरात्मारूपंरूपंबहुधायःकरोति तमात्मसंस्थंयेनुपश्यंतिधीरास्तेषांसुखं
शाश्वतंनेतरेषां नित्योनित्यानांचेतनश्चेतनानामेकोबहूनांयोविदधातिकामा
न् तमात्मानेयेनुपश्यंतिधीरास्तेषांशांतिःशाश्वतीनेतरेषां तदेतदितिमन्यंते
निर्देश्यंपरमंसुखं कथंनुतद्विजानीयांकिमुभातिनभातिवा नतत्रसूर्योभा
तिनचचंद्रतारकंनेमाविद्युतोभांतिकुतोयमग्निः तमेवभांतमनुभातिसर्वंत
स्यभासासर्वमिदंविभाति पंचमावल्ली उर्ध्वमूलोअर्वाक्शाखएषोश्वत्थः
सनातनः तदेवशुक्लंतद्ब्रह्मतदेवामृतमुच्यते तस्मिंल्लोकाःश्रिताःसर्वे
तदुनात्येतिकश्चन एतद्वैतत् यदिदंकिंचजगत्सर्वंप्राणएजतिनिःसृतं

९६

महद्भयंवज्रमुद्यतंयएतद्विदुरमृतास्तेभवंति भयादस्याग्निस्तपतिभयात्त
पतिसूर्यः भयादिंद्रश्चवायुश्चमृत्युर्धावतिपंचमः इहचेदशकद्बोद्धुंप्राक्शरी
रस्यविस्रसः ततःसर्गेषुलोकेषुशरीरत्वायकल्पते यथादर्शेतथात्मनियथास्व
प्नेतथापितृलोके यथाप्सुपरीवददृशेतथागंधर्वलोकेछायातपयोरिवब्रह्म
लोके इंद्रियाणांपृथग्भावमुदयास्तमयौचयत पृथगुत्पद्यमानानांमत्वाधीरो
नशोचति इंद्रियेभ्यःपरंमनोमनसःसत्वमुत्तमं सत्वादधिमहानात्मामहतो
व्यक्तमुत्तमं अव्यक्तात्परःपुरुषोव्यापकोलिंगएवच॥ यंज्ञात्वामुच्यतेजंतुरमृ
तत्वंचगच्छति नसंदृशेतिष्ठतिरूपमस्यनचक्षुषापश्यतिकश्चनैनं हृदाम
नीषामनसाभिक्लृप्तोयएतद्विदुरमृतास्तेभवंति यदापंचावतिष्ठंतेज्ञा

नानिमनसासह बुद्धिश्चनविचेष्टति तामाहुः परमांगतिं तांयोगमितिमन्यंते
स्थिरामिंद्रियधारणां अप्रमत्तस्तदाभवतियोगोहिप्रभवाप्ययौ नैववाचान
मनसाप्राप्तुंशक्योनचक्षुषा अस्तीतिब्रुवतोन्यत्रकथंतदुपलभ्यते अस्ती
त्येवोपलब्धव्यस्तत्वभावेनचोभयोः अस्तीत्येवोपलब्धस्यतत्वभावःप्रसीद
ति यदासर्वेप्रमुच्यंतेकामायेस्यहृदिश्रिताः अथमर्त्योमृतोभवत्यत्रब्रह्मसम
श्नुतेइति यदासर्वेप्रभिद्यंतेहृदयस्येहग्रंथयः अथमर्त्योमृतोभवत्येतताव
दनुशासनं शतंचैकाहृदयस्यनाड्यस्तासांमूर्द्धानमभिनिःसृतैका त
योर्ध्वमायन्नमृतत्वमेति विष्वगन्या उत्क्रमणेभवंति अंगुष्ठमात्रः
पुरुषोंतरात्मासदाजनानांहृदयेसन्निविष्टः तंस्वाच्छरीरात्प्रवृहेन्मुं

जादिवेषीकां घेर्यैण तंविद्याच्छुक्रममृतंतद्विद्याच्छुक्रममृतमिति मृत्युप्रोक्तां
नाचिकेतोथलब्ध्वा विद्यामेतांयोगविधिंचकृत्स्नं ब्रह्मप्राप्तोविरजोभूद्विमृत्यु
रन्योप्येवंयोगविदध्यात्ममेव॥ सहनाववतु सह नौभुनक्तु सह वीर्यंकरवावहै॥
तेजस्विनावधीतमस्तुमाविद्विषावहै ॐशांतिः शांतिः शांतिः॥षष्ठीवल्ली॥ इत्य
थर्ववेदोपनिषत्सुकठवल्ल्याख्यायामुत्तरवल्लीसमाप्ता षट्त्रिंशत्॥३६॥ बुद्ध्वा
प्यत्यंतवैरस्यंविषयेषुसुदुर्मतिः बध्नातिभावनांभूयोनरोनासौसगर्दभः केने
षितंपतति प्रेषितंमनः केनप्राणःप्रथमःप्रैतियुक्तः केनेषितांवाचमिमांवदंति
चक्षुःश्रोत्रंकउदेवोयुनक्ति श्रोत्रस्यश्रोत्रंमनसोमनोयद्वाचोहवाचंसउप्रा यस्मादित्यर्थः
णस्यप्राणश्चक्षुषश्चक्षुरतिमुच्यधीराः प्रेत्यस्माल्लोकादमृताभवंति

इति शिष्य प्रश्ने जाते श्रोत्रस्यश्रोत्रंयः स त्वयापृष्टो भवती सु नरमाहगुरुः वा चद्वितीया प्रथमार्थे ए तादृशं ज्ञात्वेति शेषः अतिमुच्यदेहेंद्रियो
दिषु आत्मताभिनिवेशं त्यक्त्वा अतएवधीराः अस्माल्लोकात्प्रेत्य अमृताभवंति

बुद्धिवृत्त्यागोचरत्वादविषयः तद्ब्रह्मेदृशमिति अतो न विजानीमो यथा येन प्रकारेणैतद्ब्रह्मानुशिष्यात् तदुपदिशेत् शिष्यायेति भावः ॥१॥ एवं तथा
प्रत्यक्षाद्यविषयत्वेऽपि आगमेन तज्ज्ञातुं शक्यतामित्याशंक्य आगममाह अन्यदेवेति ॥ विदितात् व्याकृतात् पृथग् अपि अविदिताद् अव्याकृतादधि अधिकं भि-
न्नमित्यर्थः ॥ अस्यार्थस्याचार्यपरंपराप्राप्तत्वमाह इति शुश्रुम श्रुतवन्तो वयं पूर्वेषामाचार्याणां वचनं ये नोऽस्मभ्यं तद्ब्रह्म व्याख्यातवन्तः ॥ अनभ्युदितं अप्रकाशितं अ-



न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशि-
ष्यात् ॥ अन्यदेव तद्विदितादथो अविदितादधि इति शुश्रुम पूर्वेषां ये नस्तद्व्याच-
चक्षिरे ॥ यद्वाचानभ्युदितं येन वागभ्युद्यते तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास-
ते ॥ यन्मनसा न मनुते येनाहुर्मनो मतं तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपास-
ते ॥ यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति तदेव ब्रह्म त्वं विद्धि नेदं यदिदमु-
पासते ॥ यच्छ्रोत्रेण न शृणोति येन श्रोत्रमिदं श्रुतं तदेव ब्रह्म त्वं विद्धि नेदं य-
दिदमुपासते ॥ यत्प्राणेन न प्राणिति येन प्राणः प्रणीयते तदेव ब्रह्म त्वं विद्धि ने-
दं यदिदमुपासते ॥ प्रथमः खण्डः ॥१॥ यदि मन्यसे सुवेदेति दहरमेवापि नू-
नं त्वं वेत्थ ब्रह्मणो रूपं यदस्य त्वं यदस्य च देवेष्वथ नु मीमांस्यमेव ते म-

यदि कदाचिन्मन्यसे सुवेदेति सुष्ठु वेदाहं ब्रह्मेति दहरमेवाल्पमेवापि नूनं त्वं वेत्थ जानीषे [illegible] यदस्य ब्रह्मणो रूपं ॥ यदपि अस्य
ब्रह्मणो रूपं देवेषु वेत्थ त्वं तदपि नूनं दहरमेव वेत्थेति मन्येऽहं ॥ यत एवमथ नु तस्मान्मन्ये अद्यापि मीमांस्यमेव ते तव ब्रह्म

भ्युद्यते प्रकाश्यते नेदं
ब्रह्म यदिदमित्युपा-
धिभेदविशिष्टमनात्मे-
श्वराद्युपासते ॥ यद्ब्रह्म
मनसा न मनुते न संक-
ल्पयति येन ब्रह्मणा
मतं विषयीकृतं व्याप्तं
आहुः कथयन्ति ॥ य-
च्चक्षुषा न पश्यति न वि-
षयीकरोति येन चक्षूंषि
विपश्यति व्याप्नोति
थ ९ ९
श्लोकः ॥

एवमाचार्येणोक्तः शिष्य एकान्तवासी रिनास्त्वानुभवं सपाद्याचार्यमुपगम्योवाचाथेदानीं विदितं ब्रह्मेति कथमिति शृणु नाहं मन्ये
सुवेदेति नैवाहं मन्ये सु[illegible] वेद ब्रह्मेति नैवं नोऽहि विदितं त्वया ब्रह्मेतिउक्त आह नो न वेदेति वेद च वेदैव वेति च वाच्छन्न वेदेति॥ न
नु कथमिदं विप्रतिषिद्धमुच्यते नेत्याह यः नोऽस्माकं ब्रह्मचारिणां मध्ये तदुक्तं वचनं तत्त्वतो वेद स तद्ब्रह्म वेद किं तद्वचनं तदाह नो न वेदेति वेद चेति अस्यार्थः नेवेदेति

न्यो विदितं नाहं मन्ये सुवेदेति नो न वेदेति वेद च॥ यो नस्तद्वेद तद्वेद नो न वेदेति वेद च॥
यस्यामतं तस्य मतं मतं यस्य न वेद सः अविज्ञातं विजानतां विज्ञातमविजानतां॥ प्र
तिबोधविदितं मतममृतत्वं हि विंदते आत्मना विंदते वीर्यं विद्यया विंदतेऽमृतं इह चे
दवेदीदथ सत्यमस्ति न चेदिहावेदीन्महती विनष्टिः भूतेषु भूतेषु विचित्य धीराः प्रे
त्यास्माल्लोकादमृता भवंति द्वितीयः खंडः २ ब्रह्म ह देवेभ्यो विजिग्ये तस्य ह ब्रह्म
णो विजये देवा अमहीयंत त ऐक्षंतास्माकमेवायं विजयोऽस्माकमेवायं महिमेति तद्धैषां
विजज्ञौ तेभ्यो ह प्रादुर्बभूव तन्न व्यजानंत किमिदं यक्षमिति तेऽग्निमब्रुवञ्जातवेद
एतद्विजानीहि किमिदं यक्षमिति तथेति तदभ्यद्रवत्तमभ्यवदत्कोऽसीत्यग्निर्वा अह
मस्मीत्यब्रवीज्जातवेदा वा अहमस्मीति तस्मिंस्त्वयि किं वीर्यमित्यपीदं सर्वं द

नोक्तः स्वप्रकाशस्व
रूपत्वादन्यथा मेयाभा
वप्रसंगात् इदं तत्त्वेन नु
नो वेद चेति॥ अथ श्रुतिः
समस्तसंवादनिर्यं समर्
थमस्य बोधयति यस्येति
अमतं इदं तत्त्वेन तस्य मतं
ज्ञातं यस्य मतमिदं न हैन
ज्ञातं न वेद सः यत अ
विज्ञातं विजानतां विज्ञा
तमविजानतां देहेन्द्रिया
दिषु आत्मबुद्धिमतां वि
ज्ञातं ब्रह्मेति बुद्धिमदिति

म

ति

मतं

न विदुषां मतः प्रतिबोधविदितं प्रत्ययप्रत्यगात्म[illegible] अमिसर्थः हि यतो अमृतत्वं मोक्षं विंदते लभते कथ
मात्मविद्ययामृतत्वं भवतीत्याह आत्मना स्वेन रूपेण विंदते लभते वीर्यं बलं आत्मविद्याजन्यं मतो विद्यया विंदतेऽमृतं

यतः

१००

हेयं यदिदं पृथिव्यामिति तस्मै तृणं निदधावेतद्दहेति तदुपप्रेयाय सर्वजवेन तन्न श
शाक दग्धुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमिति अथ वायुमब्रुवन्वा
यवेतद्विजानीहि किमिदं यक्षमिति तथेति तदभ्यद्रवत्तमभ्यवदत्कोसीति वा
युर्वा अहमस्मीत्यब्रवीन्मातरिश्वा वा अहमस्मीति तस्मिंस्त्वयि किं वीर्यमित्यपीदं स
र्वमाददीयं यदिदं पृथिव्यामिति तस्मै तृणं निदधावेतदादत्स्वेति तदुपप्रेयाय सर्व
जवेन तन्न शशाकादातुं स तत एव निववृते नैतदशकं विज्ञातुं यदेतद्यक्षमि
त्यथेन्द्रमब्रुवन्मघवन्नेतद्विजानीहि किमिदं यक्षमिति तथेति तदभ्यद्रव
त्तस्मात्तिरोदधे स तस्मिन्नेवाकाशे स्त्रियमाजगाम बहुशोभमानामुमां हे
मवतीं तां होवाच किमिदं यक्षमिति ब्रह्मेति होवाच ब्रह्मणो वा एतद्विजये

अहं विज्ञातुं न शकं न समर्थोस्मि

महीयध्वमिति ततोहैवविदांचकार ब्रह्मेति तस्माद्वा इंद्रो एते देवा अतितरामिवान्या
न्देवान्यदग्निर्वायुरिंद्रस्ते ह्येनंदिष्टंपस्पृशुः सह्येतत्प्रथमो विदांचकार ब्रह्मेति तस्ये
ष आदेशो यदेतद्विद्युतो विद्युतदा३ इति निमीमिषदा३ इत्याधिदैवतमथाध्यात्मंयदेतद्गच्छ
तीव च मनो नेन्वचैतदुपस्मरत्यभीक्ष्णं संकल्पस्तद्धनंनाम तद्धनमित्युपासितव्यं स
य एतदेवं वेदाभिहितं सर्वाणि भूतानि संवांछंत्युपनिषदं भो ब्रूहीत्युक्ता त उपनि
षत् ब्राह्मीं वाव त उपनिषदमब्रूमेति तस्यै तपो दमः कर्मेति प्रतिष्ठा वेदाः सर्वांगा
नि सत्यमायतनं यो वा एतामुपनिषदं वेदापहत्य पाप्मानमनंते स्वर्गे लोके
ज्येये प्रतितिष्ठति प्रतिष्ठतीति ॥ तृतीयः खंडः ॥ ३ ॥ इत्यथर्ववेदे केनोपनि
षत्समाप्ता सप्तविंशत ॥ २७ ॥ ॐ अथ पुरुषो ह वै नारायणो कामयत प्रजाः

स्रजेयइति नारायणात्प्राणोजायतेमनः सर्वेंद्रियाणिच खंवायुर्ज्योतिरापः पृथिवी
विश्वस्यधारिणी नारायणाद्ब्रह्माजायतेनारायणाद्रुद्रोजायतेनारायणात्प्रजाप
तिः प्रजायते नारायणादिंद्रोजायते नारायणादष्टौवसवः नारायणादेकादश
रुद्राः॥नारायणाद्द्वादशादित्याः सर्वेदेवताः सर्वेऋषयः सर्वाणिछंदांसि सर्वा
णिचभूतानिनारायणादेवसमुत्पद्यंते नारायणेप्रलीयंतेनारायणेप्रलीयंते १
अथनित्योदेवएकोनारायणो ब्रह्माचनारायणः शिवश्चनारायणः शक्रश्च
नारायणोद्वादशादित्याश्चनारायणोवसवोश्विनोचनारायणः सर्वेऋष
योनारायणः कालश्चनारायणोदिशश्चनारायणोधश्चनारायणउर्ध्वंच
नारायणोमूर्तामूर्तंचनारायणोंतर्बहिश्चनारायणोनारायणएवेदंसर्वंय

मूर्तं पञ्चमात्रमथ नित्यो निष्कलंको निराख्यातो निर्विकल्पो निरंजनः ॥ शुद्धो दे
व एको नारायणो न द्वितीयोऽस्ति कश्चिद्य एवं वेद स विष्णुरेव भवति स विष्णुरेव भवति
॥२॥ हंससारथिं कृत्वा मनः प्रग्रहवान्युमान् प्रयाति परमं पारं विष्णोराख्यं पदम
व्ययं ॥ एतद्वै नारायणस्योपनिषदं यो ह वै नारायणस्योपनिषदं यो ह वै नारायणस्यो
पनिषदमधीते स सर्वेभ्यः पापेभ्यो विमुक्तो भवति ॥ स सर्वेभ्यो घोरेभ्यो विमुक्तो भ
वति स सर्वान्कामानवाप्नोति स सर्वांश्च लोकानाप्नोति ब्रह्मत्वं च गत्वामृतत्वं
च गच्छत्यमृतत्वं च गच्छतीत्यो मित्येतदग्रे व्याहरेन्नम इति पश्चान्नाराय
णायेत्युपरिष्टादो मित्येकाक्षरं नम इति द्वे अक्षरे नारायणायेति पंचाक्ष
राणि एतद्वै नारायणस्याष्टाक्षरं पदं यो ह वै नारायणस्याष्टाक्षरं पदम

१०२

102

धीत्यानुपद्रवः सर्वमायुरेत्येति विंदते प्राजापत्यं रायस्पोषं गोः पत्यं ततोमृत
त्वमश्नुते ततोमृतत्वमश्नुत इति॥ प्रत्यगानंदब्रह्मपुरुषं प्रणवस्वरूपमका
रउकारमकार इतितानेकधासमभवत्तदेतदोमिति यमुक्त्वामुच्यते योगी ज
न्मसंसारबंधनात्॥ ॐ नमो नारायणायेति मंत्रोपासको वैकुंठभवनं गमिष्य
ति तदिदं पुंडरीकाक्षं विज्ञानघनं तस्मात्तडिदाभामात्रं ब्रह्मण्यो दे
वकीपुत्रो ब्रह्मण्यो मधुसूदन इति सर्वभूतस्थमेकं नारायणं कारणरूप
पमकारं परं ब्रह्म ॐ मित्येतदथर्वशिरो यो धीते प्रातरधीयानो रात्रिकृ
तं पापं नाशयति सायमधीयानो दिवसकृतं पापं नाशयति मध्यंदिन
मादित्याभिमुखो धीयानः पंचमहापातकोपपातकात्प्रमुच्यते॥

सर्व्ववेदपारायणं लभते नारायणे सायुज्यमाप्नोति नारायणे सायुज्यमाप्नोतीति इ
त्यथर्ववेदे नारायणोपनिषत्समाप्ता ॥ विंशत् २८ ॐ अंभस्यपारे भुवनस्य मध्ये नाकस्य
मध्ये महतो महीयान् शुक्रेण ज्योतींषि समनुप्रविष्टः प्रजापतिश्चरति गर्भे अंतः यस्मि
न्निदं सर्वं विदेति सर्वं यस्मिन्देवा अधिविश्वे निषेदुः तदेव भूतं तदु भव्यमानमिदं तदक्ष
रे परमे व्योमन् येनावृतं खं च दिवं च महीं च येनादित्यस्तपति तेजसा भ्राजमानैः य
दंतः समुद्रे कवयो वदंति तदक्षरे परमे प्रजाः यतः प्रसूता जगतः प्रसूती तोयेन जीवा
न्विससर्ज भूम्यां यदौषधीभिः पुरुषान्पशूंश्च विवेश भूतानि चराचराणि अतः प
रं नान्यदणीयसं हि परात्परं यन्महतो महांतं यदेकमव्यक्तमनंतरूपं विश्वं पुराणं
तमसः परस्तात् तदेवर्तं तदु सत्यमाहुस्तदेव ब्रह्म परमं कवीनां इष्टापूर्तं बहुधा

१०३

103

जातं जायमानं विश्वं बिभर्त्ति भुवनस्य नाभिः तदेवाग्निस्तद्वायुस्तत्सूर्यस्तदु चंद्रमाः॥
तदेव शुक्रममृतं तद्ब्रह्म तदापस्तत्प्रजापतिः सर्वे निमेषा जज्ञिरे विद्युतः पुरुषादधि।
कला मुहूर्त्ताः काष्ठाश्चाहोरात्राश्च सर्वशः अर्द्धमासा मासा ऋतवः संवत्सरश्च क-
ल्पतां स आपः सदोघे उभे इमे अंतरिक्षमथो भुवः नैनमूर्ध्वं न तिर्यंचं न मध्ये
परिजग्रभत् न तस्येशे कश्चन तस्य नाम महद्यशः न संदृशे तिष्ठति रूपम-
स्य न चक्षुषा पश्यति कश्चनैनं हृदा मनीषा मनसाभिक्लृप्तो य एतद्विदुरमृता
स्ते भवंति अद्भ्यः संभूतो हिरण्यगर्भ इत्यष्टोवेषो हि देवः प्रदिशोनु सर्वाः पूर्वो
हि जातः स उ गर्भे अंतः स विजायमानः स जनिष्यमाणः प्रत्यङ्मुखास्ति-
ष्ठति विश्वतोमुखः विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वत

१०३

स्यात् संबाहुभ्यां संधमति संपतत्रैर्द्यावाभूमी जनयन्देव एकः ॥ वेनस्तत्पश्यन्वि
श्वा भुवनानि विद्वान्यत्र विश्वं भवत्येकनीडं यस्मिन्निदं सं च विदेकं स ओतः प्रोतश्च
विभूः प्रजासु ॥ प्रतद्वोचे अमृतन्नो विद्वान्गंधर्वो नाम निहितं गुहासु त्रीणि प
दानि निहिता गुहासु यस्तद्वेद स पितुः पिता सत् ॥ स नो बंधुर्जनिता स विधाता धामानि वेद
भुवनानि विश्वा ॥ यत्र देवा अमृतमानशानास्तृतीये धामान्यभ्यैरयंत ॥ परि द्यावापृथि
वी यंति सद्यः परि लोकान्परि दिशः परि स्वः ॥ ऋतस्य तंतुं वितितं विसृत्य तदप
श्यत्तदभवत्प्रजासु ॥ परीत्य लोकान्परीत्य भूतानि परीत्य सर्वान्प्रदिशो दिश
श्च ॥ प्रजापतिः प्रथमजा ऋतस्यात्मनात्मानमभि संबभूव ॥ सदसस्पतिम
द्भुतं प्रियमिंद्रस्य काम्यं सनिं मेधमयासिषं ॥ उद्दीप्यस्व जातवेदोपघ्नन्निर्ऋतिं

१०४

104

र्ईतिं मम पशूंश्च मह्यमावह जीवनं च दिशो दिश मानो हिंसी जीतवेदो गामश्वं पुरुषं जगत अबिभ्रदग्न आगहि श्रिया मा परिपालय पुरुषस्य विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात तत्पुरुषाय विद्महे महादेवाय धीमहि तन्नो रुद्रः प्रचोदयात तत्पुरुषाय विद्महे वक्रतुंडाय धीमहि तन्नो दंती प्रचोदयात तत्पुरुषाय विद्महे नंदिकेश्वराय धीमहि तन्नो वृषभः प्रचोदयात तत्पुरुषाय विद्महे सुपर्णपक्षाय धीमहि तन्नो गरुडः प्रचोदयात॥ कात्यायन्यै विद्महे कन्याकुमार्यै धीमहि तन्नो दुर्गा प्रचोदयात॥ नारायणाय विद्महे वासुदेवाय धीमहि॥ तन्नो विष्णुः प्रचोदयात षण्मुखाय विद्महे महासेनाय धीमहि तन्नः षष्ठिः प्रचोदयात पावकाय विद्महे सप्तजिह्वाय धीमहि तन्नो वैश्वानरः प्रचोद

१०५

यात् वैश्वानराय विद्महे ज्वालालीलाय धीमहि तन्नो अग्निः प्रचोदयात् भास्करा
य विद्महे दिवाकराय धीमहि तन्नः सूर्यः प्रचोदयात् दिवाकराय विद्महे पुष्करणाय धी
महि तन्न आदित्यः प्रचोदयात् आदित्याय विद्महे सहस्रकिरणाय धीमहि तन्नो भा
नुः प्रचोदयात् महाशूलिन्यै विद्महे महादुर्गायै धीमहि तन्नो भगवती प्रचोदयात्॥
नृसिंहाय विद्महे वज्रनखाय धीमहि तन्नः सिंहः प्रचोदयात् चतुर्मुखाय विद्महे कमंडलु
धराय धीमहि तन्नो ब्रह्मा प्रचोदयात् सहस्रपरमा देवी शतमूला शतांकुरा सर्वं हरतु
मे पापं दूर्वा दुःस्वप्ननाशिनी दूर्वा अमृतसंभूता शतमूला शतांकुरा शतं मे घ्नंतु पापा
नो शतमायुर्विवर्द्धिनी कांडात्कांडात्प्ररोहंती परुषः परुषस्परि एवा नो दूर्वे प्रतनु
सहस्रेण शतेन च अश्वक्रांते रथक्रांते विष्णुक्रांते वसुंधरे शिरसा धारिता देवि मां

रहस्वपदेपदे उद्धृतासिवराहेणकृस्ले नशतबाहुना॥ भूमिर्द्धेनुर्द्धरणीधरित्री
लोकधारिणी मृत्तिके हरमेपापंयन्मयादुष्कृतंकृतं त्वयाहतेनपापेनजीवामिशरदः
शतं मृत्तिकेदेहिमेपुष्टिंत्वयिसर्वप्रतिष्ठितं॥ वाचाकृतंकर्मकृतंमनसायत्तुचिंतितं।
गंधद्वारांदुराधर्षांनित्यपुष्टांकरीषिणीं ईश्वरींसर्वभूतानांतामिहोपह्वयेश्रियं॥
ॐभूर्लक्ष्मीर्भुवोलक्ष्मीःस्वःकालकर्णीतन्नोमहालक्ष्मीःप्रचोदयात् पद्मप्रभेप
द्मसुंदरीधर्मकर्मषयेस्वाहा हिरण्यशृंगंवरुणांप्रपद्येतीर्थंमेदेहियाचितः यन्मया
भुक्तमसाधूनांपापेभ्यश्चप्रतिग्रहः यन्मेमनसावाचाकर्मणावादुष्कृतंकृतंतत
न्मइंद्रोवरुणोबृहस्पतिःसविताचपुनंतुपुनःपुनः सुमित्रियानआपओ
षधयःसंतु दुर्मित्रास्तस्मैभूयासुर्योस्मान्द्वेष्टियंचवयंद्विष्मः नमोग्न

१०५

येसुमतेनमइंद्रायनमोवरुणायनमोवायव्यैनमोऽग्नयेयदपांक्रूरंयदमेध्यंयदशांतं
तदपगच्छतात् अत्यशनादतिपानाद्यच्च उग्रात्प्रतिग्रहात् तन्मेवरुणोराजापा
णिनाह्यवमर्शतु सोहमपापोविरजोनिर्मुक्तोमुक्तकिल्बिषः नाकस्यपृष्ठमा
रुह्यगच्छेद्ब्रह्मसलोकतां इमंमेगंगेयमुनेसरस्वतिशुतुद्रिस्तोमंसचतापरु
ष्ण्या असिक्न्यामरुद्वृधेवितस्तयार्जीकीयेशृणुह्यासुषोमया ऋतंचसत्यंचाभी
द्धात्तपसोध्यजायत अहोरात्राणिविदधद्विश्वस्यमिषतोवशी सूर्याचंद्रम
सौधातायथापूर्वमकल्पयत् दिवंचपृथिवींचांतरिक्षमथोस्वः यत्पृथि
व्यांरजःस्वमांतरिक्षेविरोदसी इमांस्तदापोवरुणःपुनात्वघमर्षणः एषभू
तस्यभव्येभुवनस्यगोप्ता एषपुण्यकृतांलोकानेषमृत्योर्हिरण्मयः द्यो

वातृथिव्योर्हिरण्मयं संसृतं सुवस्तनः सुवः संसिसादि आईं ज्वलति ज्योतिरहम
स्मि ज्योतिर्ज्वलति ब्रह्माहमस्मि योहमस्मि ब्रह्माहमस्मि स्वयमेवाहं मां जुहो
मि स्वाहा अकार्यकार्यवकीर्णी स्तेनो भ्रूणहा गुरुतल्पगः ॥ वरुणोपामघमर्षण
स्तस्मात्पापात्प्रमुच्यते रजोभूमिस्त्वमारोदयस्व प्रवदंति धीराः पुनंतु ऋषयः पुनंतु
वसवः पुनातु वरुणः पुनात्वघमर्षणः ॥ अक्रान्त्समुद्रः प्रथमे विधर्मं जनयन्प्रजा भुव
नस्य राजा वृषा पवित्रे अधि मानो अव्ये वृहत्सोमो वावृधे सुवान इंद्रः जातवेदसे सुनवा
म सोममरातीयतो निदहाति वेदः सनः पर्षदति दुर्गाणि विश्वा नावेव सिंधुं दुरिता
त्यग्निः तामग्निवर्णां तपसा ज्वलंतीं वैरोचनीं कर्मफलेषु जुष्टां दुर्गां देवीं शर
णमहं प्रपद्ये सुतरसि तरसे नमः आग्ने त्वं पारया नव्यो अस्मान्स्वस्तिभिरति

१०६

दुर्गाणि विश्वा धूम्रवपृथ्वीबहुलान उर्वीभवातोकायतनयायशंयोः विश्वानिनो दुर्गहा जातवेदः सिंधुंनिनावा दुरितातिपर्षि॥ अग्ने अत्रिवन्नमसागृणानोस्माकंबोध्यविताततूनां पृतनाजितं सहसामानमग्निमहुवमर्थंपरमात्सधस्तात् सनः पर्षदति दुर्गाणि विश्वाक्षामाहेवोअतिदुरितात्यग्निव लोहिकमीड्योअध्वरेषुसनश्चहोतान व्यश्चसत्सि स्वांचाग्नितन्वं विप्राय स्वास्मभ्यं चसौभगमायजस्व प्रथमः खंडः १
परस्ताद्यशोगुहासु समस्तुपर्णपक्षायधीमहि शतबाहुनापुनरजायसुवोराजासधस्या भूरग्नयेपृथिव्यैस्वाहा भुवोवायवेंतरिक्षायस्वाहा स्वरादित्यायदिवेस्वाहा॥ भूर्भुवः स्वश्चंद्रमसे दिग्भ्यः स्वाहा॥ नमोदेवेभ्यः स्वधापितृभ्यो भूर्भुवः स्वरों २
भूरन्नमग्नयेपृथिव्यैस्वाहा भुवोन्नंवायवेंतरिक्षायस्वाहा स्वरन्नमादित्या

यद्दिवेस्वाहा भूर्भुवःस्वरन्नंचंद्रमसेदिग्भ्यःस्वाहा।नमोदेवेभ्यःस्वधापितृभ्योभू
र्भुवःस्वरन्नमों ४ भूरग्नयेपृथिव्यैचमहतेचस्वाहा भुवोवायवेंतरिक्षायचम हते
चस्वाहा स्वरादित्यायदिवेचमहतेचस्वाहा भूर्भुवःस्वश्चंद्रमसेचनक्षत्रेभ्यश्चदिग्भ्य
श्चमहतेचस्वाहा।।नमोदेवेभ्यः स्वधापितृभ्योभूर्भुवःस्वर्महरों ५ पाहिनोअग्न
एनसेस्वाहा पाहिनोविश्ववेदसेस्वाहा यज्ञंपाहिविभावसोस्वाहा सर्वंपाहिशत
क्रतोस्वाहा यश्छंदसामृषभोविश्वरूपश्छंदोभ्यश्छंदांस्याविवेशतांशक्यः
प्रोवाचोपनिषदिंद्रोज्येष्ठइंद्रायऋषिभ्योनमोदेवेभ्यःस्वधापितृभ्योभूर्भु
वःस्वश्छंदओं ६ नमोब्रह्मणेधारणंमेअस्त्वनिराकरणंधारयिताभूयासंकर्णा
योःश्रुतंमाच्योढंममामुष्यओंऋतंतपःसत्यंतपःश्रुतंतपःशांतंतपोदानंतपो

गुहायां निहितो ४

यत्तपस्तपो भूर्भुवः स्वर्ब्रह्मैतदुपास्स्वैतत्तपः ७ यथा वृक्षस्य संपुष्पितस्य दूराद्गंधो वा
त्येवं पुण्यस्य कर्मणो दूराद्गंधो वाति यथासिधारां कर्तेवहितामवक्रामे यद्युवे युवे हवा
विह्वलिष्यामि कर्तं पतिष्यामीत्येवममृतादात्मानं जुगुप्सेत् ८ अणोरणीयान्
महतो महीयानात्मास्य जंतोः तमक्रतुं पश्यति वीतशोको धातुः प्रसादान्महिमा
नमीशं सप्त प्राणाः प्रभवंति तस्मात्सप्तार्चिषः समिधः सप्त जिह्वाः सप्त इमे लोका ये
षु चरंति प्राणा गुहाशया निहिताः सप्त सप्त अतः समुद्रा गिरयश्च सर्वे अस्मात्स्यं
दंते सिंधवः सर्वरूपाः अतश्च सर्वा ओषधयो रसाश्च येनैष भूतैस्तिष्ठति ह्यंतरा
त्मा ब्रह्मा देवानां पदवीः कवीनामृषिर्विप्राणां महिषो मृगाणां श्येनो गृध्राणां
स्वधितिर्वनानां सोमः पवित्रमत्येति रेभन् अजामेकां लोहितशुक्लकृष्णां

बहूीप्रजांजनयंतीसरूपां अजोह्येकोजुषमाणोनुशेतेजहात्येनांभुक्तभोगामजो
न्यः हंसःशुचिषद्वसुरंतरिक्षसद्धोतावेदिषदतिथिर्दुरोणसत् नृषद्वरसदृत
सद्व्योमसदब्जागोजाऋतजाअद्रिजाऋतंबृहत् यस्माज्जातंनपुराकिंचनास
यआविवेशभुवनानिविश्वा यस्मादन्यन्नपरंकिंचनास्तिप्रजापतिःप्रजयासं
विधानः त्रीणिज्योतींषिसचतेसषोडशीविधत्तारंहवामवसेःकृविद्धनीतिनःस
वितारंनृचक्षसं अद्यानोदेवसवितःप्रजावान्सवीःसौभगंपरादुःष्वप्न्यंसुव॥विश्वा
निदेवसवितर्दुरितानिपरासुव यद्भद्रंतन्नआसुवमधुवाताःऋतायतेमधुक्ष
रंतिसिंधवः माध्वीर्नःसंत्वोषधीः मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः म
धुद्यौरस्तुनःपिता मधुमान्नोवनस्पतिर्मधुमांअस्तुसूर्यः माध्वीर्गावोभवंतु

नः घृतंमिमिक्षे घृतमस्ययोनिर्घृते श्रितो घृतमस्यधाम अनुष्वधमावहमा
दयस्वस्वाहाकृतं वृषभवक्षिहव्यं ॥ समुद्रादूर्मिमधुमां उदारदुपांशुनासममृ
तत्वमानट् ॥ घृतस्यनामगुह्यंयदस्ति जिह्वादेवानाममृतस्यनाभिः वयंना
मप्रब्रवाघृते नास्मिन्यज्ञे धारयामानमोभिः उपब्रह्माशृणवच्छस्यमानंच
तुःशृंगोवमीद्गौरएतत् चत्वारिशृंगात्रयोअस्यपादाद्वेशीर्षेसप्तहस्तासोअ
स्य ॥ त्रिधाबद्धोवृषभोरोरवीतिमहोदेवोमर्त्यांआविवेश त्रिधाहितंपणि
भिर्गुह्यमानंग विदेवासुघृतमन्वविंदन् इंद्रएकं सूर्यएकं जजान वेनादेकं
स्वधयानिष्टतक्षुः योदेवानांप्रथमंपुरस्ताद्विश्वाधिकोरुद्रोमहाऋषि हि
रण्यगर्भंपश्यतजायमानं सनोदेवः शुभयास्मृत्यासंयुनक्तु ॥ यस्मात्परंना

१०९

109

परमस्ति किंचिद्यस्मान्नाणीयो न ज्यायोस्ति कश्चित् वृक्ष इव स्तब्धो दिवि तिष्ठत्येकस्तेनेदं पूर्णं पुरुषेण सर्वं न कर्मणा न प्रजया धनेन त्यागेनैके नामृतत्वमानशुः॥ परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशंति वेदांतविज्ञान सुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्वाः ते ब्रह्मलोके तु परांतकाले परामृताः परिमुच्यंति सर्वे दहरं विपाप्मं वरवेश्मभूतं यत्पुंडरीकं पुरमध्यसंस्थं तत्रापि दहरं गगनं विशोकस्तस्मिन्यदंतस्तदुपासितव्यं॥ यो वेदादौ स्वरः प्रोक्तो वेदांते च प्रतिष्ठितः तस्य प्रकृतिलीनस्य यः परः स महेश्वरः प्रज्योन्यः सुवभान्नाभिः सर्वमस्थेवयोनि च ९ सहस्रशीर्षं देवं विश्वाक्षं विश्वशंभुवं विश्वं नारायणं देवमक्षरं परमं प्रभुं॥

विश्वतःपरमंनित्यंविश्वंनारायणंहरिं विश्वमेवेदंपुरुषस्तद्विश्वमुपजीवति पतिंवि
श्वस्यात्मेश्वरंशाश्वतंशिवमच्युतं नारायणंमहाज्ञेयंविश्वात्मानमनामयं नाराय
णःपरंब्रह्मतत्वंनारायणःपरः नारायणःपरंज्योतिरात्मानारायणःपरः नाराय
णःपरोध्याताध्यानंनारायणःपरं परादपिपरश्चासौतस्माद्यस्तुपरात्परः यच्च
किंचिज्जगत्यस्मिन्दृश्यतेश्रूयतेपिवा अंतर्बहिश्चतत्सर्वंव्याप्यनारायणःस्थितः॥
अनंतमव्ययंकविंसमुद्रेंतंविश्वशंभुवं पद्मकोशप्रतीकाशंसुषिरंचाप्यधोमुखं अ
धोहृष्ट्यावितस्त्यांतुनाभ्यामुपरितिष्ठति हृदयंतद्विजानीयाद्विश्वस्यायतनंमहत्॥
सततंतुशिराभिस्तुलंबत्याकोशसंनिभं तस्यांतेसुषिरंसूक्ष्मंतस्मिन्सर्वंप्रति
ष्ठितं तस्यमध्येमहानग्निर्विश्वार्चिर्विश्वतोमुखः सोग्रभुग्विभजंस्तिष्ठन्नाहार

मह्यः कविः संतापयति स्वं देहमापादतलमस्तकं तस्य मध्ये वह्निशिखा अणीयोर्ध्वा
व्यवस्थिता नीलतोयदमध्यस्था विद्युल्लेखेव भास्वरा नीवारशूकवत्तन्वी पीता
भास्वत्यणूपमा तस्याः शिखाया मध्ये तु परमात्मा व्यवस्थितः स ब्रह्मा स शिवः
सेंद्रः सोक्षरः परमः स्वराट् १० अथातो योगजिह्वामेन मधुवादिति अहमेव कालो
नानाहं कालस्य नारायणा स्थितो व्यवस्थितश्चत्वारि च ऋतं सत्यं परं ब्रह्म पुरुषं कृ
ष्णपिंगलं ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः आदित्यो वा एष एतन्मंडलं
तपति तत्र ता ऋचस्तदृचा मंडलं स ऋचां लोकोऽथ य एष एतस्मिन्मंडलेऽर्चि
षि पुरुषस्तानि यजूंषि स यजुषा मंडलं स यजुषां लोकोऽथ य एष एतस्मिन्मं
डलेऽर्चिर्दीप्यते तानि सामानि स साम्नां मंडलं स साम्नां लोकः सैषा त्रय्येव वि

द्यातपतियएषांतरादित्योहिरण्मयःपुरुषआदित्योवैतेजओजोबलंयशश्चक्षुःश्रो
त्रमात्मामनोमन्युर्मनुर्मृत्युःसत्योमित्रोवायुराकाशःप्राणोलोकपालःकःकिंतत्
सत्यमन्नमायुरमृतोजीवोविश्वःकतमःस्वयंभूःप्रजापतिःसंवत्सरइतिसंव
त्सरोवादित्योयएषपुरुषएषभूतानामधिपतिर्ब्रह्मणःसायुज्यंसलोकतामा
प्नोत्येतासामेवदेवतानांसायुज्यंसार्ष्टितांसमानलोकतामाप्नोतियएवंवेदेत्यु
पनिषत् ११ इत्यथर्ववेदेबृहन्नारायणोपनिषत्समाप्तैकोनचत्वारिंशत्
३९ ॐ घृणि सूर्यआदित्यमर्चयंति तपःसत्यंमधुक्षरंति तद्ब्रह्मतदापआ
पोज्योतीरसोमृतंब्रह्मभूर्भुवःस्वरों सर्वोवैरुद्रस्तस्मैरुद्रायनमोअस्तुपुरु
षोवैरुद्रस्तन्महोनमोनमः विश्वंभूतंभव्यंभुवनंचित्रंबहुधाजातंजा

२२२

।।।

यमानंचयत् सर्वोह्येषरुद्रस्तस्मैरुद्रायनमोस्तु कद्रुद्रायप्रचेतसेमीढुष्टमाय
तव्यसेवोचेमशंतमोहृदिसर्वोह्येषरुद्रस्तस्मैरुद्रायनमोस्तुनमोहिरण्य
बाहवेनमोहिरण्यवर्णायहिरण्यरूपायहिरण्यपतयेअंबिकापतयउमा
पतयेनमोनमः यस्यवैकंकृत्यग्निहोत्राहवनीयोभवतिप्रतिष्ठितः प्रत्येवा
स्याहुतयस्तिष्ठंत्यथोप्रतिष्ठित्यैकृणुष्वपाजइतिपंच अदितिर्देवागंधर्वाम
नुष्याःपशवोसुरास्तेषांसर्वभूतानांमातामेदिनीमहतीमहीसावित्रीगाय
त्रीजगत्युर्वीपृथ्वीबहुलाविश्वभूताकतमाकायासासत्येत्यमृतेतिवसि
ष्ठः आपोवाइदंविश्वंसर्वंविश्वाभूतान्यापःप्राणोवाआपःपशवआ
पोन्नमापोअमृतमापःसम्राडापोविराडापःस्वराडापश्छंदांस्या

२२२

पोज्योतीष्यापोयजंष्याप: सत्यमाप: सर्वादेवताआपोभूर्भुव:स्वरापॐ आप:पुनंतु
पृथिवींपृथिवीपूतापुनातुमां पुनंतुब्रह्मणस्पतिर्ब्रह्मपूतापुनातुमां यदुच्छिष्टमभोज्यं
वायद्वादुश्चरितंमम सर्वंपुनंतुमामापोऽसतांचप्रतिग्रहं जुहोमिस्वाहा॥ अग्निश्च
मामन्युश्चमन्युपतयश्चमन्युकृतेभ्य:पापेभ्योरक्षंतां यदह्नापापमकार्षंमनसावा
चाहस्ताभ्यांपद्भ्यामुदरेणशिश्नाअहस्तदवलुंपतुयत्किंचिद्दुरितंमयि इदमहं
माममृतयोनौसत्यज्योतिषिजुहोमिस्वाहा सूर्यश्चमामन्युश्चमन्युपतयश्च
मन्युकृतेभ्य:पापेभ्योरक्षंतां यद्रात्र्यापापमकार्षंमनसावाचाहस्ताभ्यांपद्भ्यामुदरे
णशिश्नारात्रिस्तदवलुंपतुयत्किंचिद्दुरितंमयि इदमहमामृतयोनौसूर्यज्यो
तिषिजुहोमिस्वाहा आयातुवरदादेव्यक्षरंब्रह्मसंमितं गायत्रीछंदसांमाता

इदं ब्रह्मजुषस्व नः ॐ ओजोसि सहोसि बलमसि भ्राजोसि देवानां धामनामासि
विश्वमसि विश्वायुः सर्वमसि सर्वायुरभिभूः ॐ गायत्रीमावाहयामि सावित्रीमावा
हयामि सरस्वतीमावाहयामि ॐ भूः ॐ भुवः ॐ स्वः ॐ महः ॐ जनः ॐ तपः ॐ सत्यं
ॐ तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात् ॐ आपो
ज्योतिरसोमृतं ब्रह्म भूर्भुवः स्वः ॐ ॐ तद्ब्रह्म ॐ तद्वायुः ॐ तेदात्मा ॐ तत्सर्वं
ॐ तत्परोनमः उत्तमे शिखरे देवि भूम्यां पर्वतमूर्द्धनि ब्राह्मणेभ्यो ह्यनु
ज्ञाता गच्छ देवि यथासुखं ॐ तश्चरसि भूतेषु गुहायां विश्वमूर्त्तिषु त्वं यज्ञ
स्त्वं विष्णुस्त्वं वषट्कारस्त्वं रुद्रस्त्वं ब्रह्मा त्वं प्रजापतिः ॐ अमृतोपस्तरणा
मसि प्राणे निविष्टोमृतं जुहोमि प्राणाय स्वाहा पाने निविष्टोमृतं जुहो

म्यपानायस्वाहा व्याने निविष्टोमृतंजुहोमिव्यानायस्वाहोदाने निविष्टो मृतंजुहोम्युदानाय
स्वाहा समाने निविष्टोमृतंजुहोमि समानायस्वाहा प्राणे निविष्टोमृतंजुहोमि शिवोमा
विशायप्रदाहाय प्राणायस्वाहा पाने निविष्टोमृतंजुहोमि शिवोमा विशाय प्रदाहाया
पानायस्वाहा व्याने निविष्टोमृतंजुहोमि शिवोमा विशाय प्रदाहाय व्यानायस्वाहोदाने नि
विष्टोमृतंजुहोमि शिवोमा विशायप्रदाहायोदानायस्वाहा॥ समाने निविष्टोमृतंजुहोमि शि
वोमा विशायप्रदाहाय समानायस्वाहा॥ ब्रह्मणि म आत्मामृतत्वायामृतापिधानमसि
२ श्रद्धायां प्राणे निविश्यामृतं हुतं प्राणमन्नेनाप्यायस्वापाने निविश्यामृतं हुतम
पानमन्नेनाप्यायस्व व्याने निविश्यामृतं हुतं व्यानमन्नेनाप्यायस्वोदाने निवि
श्यामृतं हुतमुदानमन्नेनाप्यायस्व समाने निविश्यामृतं हुतं समानमन्नेनाप्याय

७

११३

113

स्वब्रह्मणि स आत्मामृतत्वाय प्राणानां ग्रंथिरसि रुद्रो मा विशांतकस्तेनान्नेना

प्यायस्व अंगुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ईशः सर्वस्य जगतः प्रभुः प्रीणा

तु विश्वभुक् मेधा देवी जुषमाणा न आगाद्विश्वाची भद्रा सुमनस्यमाना त्वया जुष्टा

जुषमाणा दुरुक्ता बृहद्वदेम विदथे सुवीराः त्वया जुष्ट ऋषिर्भवति देवि त्वया ब्रह्मागत

श्रीरुत त्वया जुष्टश्चित्रं विंदते वसु सा नो जुषस्व द्रविणेन मेधे मेधां म इंद्रो ददा

तु मेधां देवी सरस्वती मेधां मे अश्विनावुभावाधत्तां पुष्करस्रजौ ॥ अप्सरस्सु च

या मेधा गंधर्वेषु च यन्मनः दैवी मेधा मनुष्यजा सा मां मेधा सुरभिर्जुषतां या

सां मेधा सुरभिर्विश्वरूपा हिरण्यवर्णा जगती जगत्या ॥ ऊर्जस्वती पयसा पिन्व

माना सा मां मेधा सुप्रतीका जुषतां सद्योजातं प्रपद्यामि सद्योजाताय वै नमः भवे

११३

भवेनातिभवेभवस्वमांभवोद्भवायनमः वामदेवायनमोज्येष्ठायनमःश्रेष्ठायन
मोरुद्रायनमःकालायनमःकलविकरणायनमोबलविकरणायनमोबलायनमोब
लप्रमथनायनमःसर्व्वभूतदमनायनमोनमोन्मनायनमः अघोरेभ्योथ
घोरेभ्योघोरघोरतरेभ्यःसर्वतःसर्वसर्वेभ्यःनमस्तेरुद्ररूपेभ्यः तत्पुरुषायविद्म
हेमहादेवायधीमहितन्नोरुद्रःप्रचोदयात् ईशानःसर्वविद्यानामीश्वरःसर्वभू
तानांब्रह्माधिपतिर्ब्रह्मणोधिपतिर्ब्रह्माशिवोमेस्तुसदाशिवः २ ब्रह्ममेनु
मांमधुमेनुमांब्रह्ममेवमधुमेनमां यास्तेसोमप्रजावत्सोभिसोअहं दुःस्वप्न
हदुरुष्वहायास्तेसोमप्राणांस्तान्जुहोमि॥ यइदंत्रिसुपर्णमयाचितंब्राह्मणाय
दद्याद्ब्रह्महत्यांवाएतेघ्नंतियेब्राह्मणास्त्रिसुपर्णंपठंतितेसोमंप्राप्नुवंत्यासहस्रा

त्यंकिंपुनंति ४ ब्रह्मणमेधयामधुमेधयाब्रह्मणमेवमधुमेधया अद्यानोदेवसवितःप्र
जावत्सावीःसौभगं परादुःष्वप्नंसुव विश्वानिदेवसवितर्दुरितानिपरासुव यद्भ
द्रंतन्नआसुव मधुवाताऋतायतेमधुक्षरंतिसिंधवः माध्वीर्नःसंत्वोषधीः।
मधुनक्तमुतोषसोमधुमत्पार्थिवंरजः मधुद्यौरस्तुनःपिता मधुमान्नोवन
स्पतिर्मधुमाँअस्तुसूर्यः माध्वीर्गावोभवंतुनः यइदंत्रिसुपर्णमयाचितंब्रा
ह्मणायदद्यात् भ्रूणहत्यांवाएतेघ्नंति येब्राह्मणास्त्रिसुपर्णंपठंति सोमंप्राप्नुवंत्या
सहस्रात्पंक्तिंपुनंति ५ ब्रह्मणमेधयामधुमेधयाब्रह्मणमेवमधुमेधया ब्र
ह्मादेवानांपदवीःकवीनामृषिर्विप्राणांमहिषोमृगाणां श्येनोगृध्राणांस्व
धितिर्वनानांसोमःपवित्रमत्येतिरेभत् हंसःशुचिषद्वसुरंतरिक्षसद्धोता

११४

वेदिषदतिथिर्दुरोणसत नृषद्वरसदृतसद्व्योमसदब्जागोजाऋतजाअद्रिजाऋ
तंबृहत यइदंत्रिसुपर्णमयाचितंब्राह्मणायदद्याद्वीरहत्यांएतेघ्नंतियेब्राह्मणास्त्रिसु
पर्णंपठंतितेसोमंप्राप्नुवंत्यासहस्रात्पंक्तिंपुनंतीति ६ प्राणापानव्यानोदानसमानामेशुध्यं
तां ज्योतिरहंविरजाविपाप्माभूयासंस्वाहा वाङ्मनश्चक्षुःश्रोत्रंजिह्वाघ्राणरेतोबुद्ध्या
कूतिसंकल्पामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासंस्वाहाशिरःपाणिपादपार्श्व
पृष्ठोदरजंघाशिश्नोपस्थपायवोमेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासंस्वाहा॥
त्वक्चर्ममांसरुधिरमेदोस्थिमज्जामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासंस्वाहा
शब्दस्पर्शरसरूपगंधामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासंस्वाहा पृथिव्यप्ते
जोवाय्वाकाशामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासंस्वाहा ७ अन्नमय

प्राणमयमनोमयविज्ञानमयानंदमयामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूया
संस्वाहा विविधिज्ञस्वाहा खखोल्कायस्वाहा उत्तिष्ठपुरुषहरितपिंगलाह्वेदे
हिदेहिदापयितामेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासंस्वाहा शुक्रेशा
लितोजांसिमेशुध्यंतांज्योतिरहंविरजाविपाप्माभूयासंस्वाहा ॐस्वाहास
त्यंपरंपरंसत्येनसुवर्ताल्लोकाच्यवंतेकदाचन सतांहिसत्यंतस्मात्सत्येरमंतेत
पइतितपोनानशनात्परं यद्धिपरंतपस्तद्दुर्धर्षंदुराधर्षंतस्मात्तपसिरमंतेद
मइतिनियतंब्रह्मचारिणास्तस्माद्दमेरमंतेशमइतिरण्येमुनयस्तस्माच्छमे
रमंतेदानमितिसर्वाणिभूतानिप्रशंसंतिदानान्नातिदुष्करंतस्माद्दानेरमंतेइ
तिधर्मइत्यासर्वमिदंपरिगृहीतंधर्मान्नातिदुश्चरंतस्माद्धर्मेरमंतेप्रजननं

इतिभूयांसस्तस्माद्भूयिष्ठाः प्रजायंतेतस्माद्भूयिष्ठाः प्रजननेरमंतेअग्नयइत्याहतस्
माद्ग्नयआधातव्याअग्निहोत्रमित्याह तस्मादग्निहोत्रेरमंतेयज्ञइतियज्ञोदेवानां
यज्ञेनहिदेवादिवंगतास्तस्माद्यज्ञेरमंतेमानसमितिविद्वांसस्तस्माद्विद्वांसएवमा
नसेरमंतेन्यासइतिब्रह्मापरःपरोहिब्रह्मातानिवाएतान्यवराणितपांसिन्यासएव
वात्यरेचयद्यएवंवेदेत्युपनिषत् ८ प्राजापत्योहारुणिःसुपर्णेयःप्रजापतिंपितर
मुपससार किंभगवन्परमंवदंतीतितस्मैप्रोवाचसत्येनवायुरावातिसत्ये
नादित्योरोचतेदिविसत्यंवाचःप्रतिष्ठासत्येसर्वंप्रतिष्ठितंतस्मात्सत्यंपरमंवदं
तितपसोदेवादेवतामग्रआयंस्तपसाऋषयःस्वरन्वविंदंस्तपसासपत्नान्प्र
णुदामारातीस्तपसिसर्वंप्रतिष्ठितंतस्मात्तपःपरमंवदंतिदमेनदांताः कि

ल्बिषमवधुन्वंतिदमेनब्रह्मचारिणः स्वरगाछंदमोभूतानांदुराधर्षंदमेसर्वंप्रति
ष्ठितंतस्माद्दमःपरमंवदंतिशमेनशांताःशिवमाचरंतिशमेननाकंमुनयोन्व
विंदन्शमोभूतानांदुराधर्षंशमेसर्वंप्रतिष्ठितंतस्माछमःपरमंवदंतिदानंयज्ञा
नांवरूथंदक्षिणालोकेदातारंसर्वभूतान्युपजीवंतिदानेनारातीरपानुदंतदा
नेनद्विषंतोमित्राभवंतिदानेनसर्वंप्रतिष्ठितंतस्माद्दानंपरमंवदंति धर्मो
विश्वस्यजगतःप्रतिष्ठालोकेधर्मिष्ठंप्रजाउपसर्पंति धर्मेणपापमपनुदंतिध
र्मेसर्वंप्रतिष्ठितंतस्माद्धर्मंपरमंवदंतिप्रजननंवैप्रतिष्ठासाधुप्रजायास्तंतुंत
न्वानःपितृणामनृणोभवंतितदेवतस्यानृणंतस्मात्प्रजननंपरमंवदंत्य
ग्नयोवैत्रयीविद्यादेवयानंपंथागार्हपत्यमृक्पृथिवीरथंतरमन्वाहार्यप

चनोयजुरंतरिक्षं वायुर्हिरण्यगर्भो वामदेव्यमाह क्नीयः सामस्वर्गो लोको बृहत्तस्मा
दग्नीन्परमं वदंत्यग्निहोत्रं सायंप्रातः सायंप्रातर्गृहाणां निष्कृतिः स्विष्टं सुहुतं य
ज्ञक्रतूनां प्रयाणं स्वर्गस्य लोकस्य ज्योतिस्तस्मादग्निहोत्रं परमं वदंति यज्ञ इति
यज्ञो हि देवानां यज्ञेन हि देवा दिवं गता यज्ञेनासुरानपानुदंत यज्ञेन हि द्विषंतो मित्रा
भवंति यज्ञे सर्वं प्रतिष्ठितं तस्माद्यज्ञं परमं वदंति मानसं वै प्राजापत्यं पवित्रं मान
सेन मनसा साधु पश्यंति मनसा ऋषयः प्रजा असृजंत मानसे सर्वं प्रतिष्ठितं
तस्मान्मानसं परमं वदंति न्यास इत्याहुर्मनीषिणो ब्रह्माणं ब्रह्मा विश्वः कत
मः स्वयंभूः प्रजापतिः संवत्सर इति संवत्सरोसावादित्यो य एष आदित्ये पुरुषः
स परमेष्ठी ब्रह्मात्मा याभिरादित्यस्तपति रश्मिभिस्ताभिः पर्जन्यो वर्षति

११८

117

पर्जन्येनौषधयोवनस्पतयःप्रजायंतऔषधिवनस्पतिभिरन्नंभवत्यन्नेनप्राणाः
प्राणैर्बलंबलेनतपस्तपसाश्रद्धाश्रद्धयामेधामेधयामनीषामनीषयाम
नसामनसाशांतिःशांत्याचित्तंचित्तेनस्मृतिःस्मृत्यास्मारंस्मारेणविज्ञानंवि
ज्ञानेनात्मानंवेदयंतियस्मादन्नंददत्सर्वाण्येतानिददात्यन्नात्प्राणाभवं
तिभूतानांप्राणैर्मनोमनसश्चविज्ञानंविज्ञानादानंदोब्रह्मयोनिःसवाएष
पुरुषःपंचधापंचात्मायेनसर्वमिदंप्रोतंपृथिवीचांतरिक्षंचद्यौश्च
दिशश्चावांतरदिशाश्चवैसर्वमिदंजगत्सचभव्यंभूतंजिज्ञासासक्लृप्तऋ
तारयिष्ठाःश्रद्धासत्योमहस्वांस्तपसोवरिष्ठोज्ञात्वातमेवंमनसाहृदाच
भूयोनमृत्युमुपयाहिविद्वांस्तस्मान्न्यासमेषांतपसामतिरिक्तमाहुः

११८

वसुरण्वोविभूरसिप्राणेत्वमसिसंधाब्रह्मन्त्वमसिविश्वसृक्तेजोदस्त्वमस्यग्नेर्वर्चो
दस्त्वमसिसूर्यस्यद्युम्नोदस्त्वमसिचंद्रमसउपयामगृहीतोसिब्रह्मणेत्वामहस
ॐमित्यात्मानंयुंजीतैतद्वैमहोपनिषदंदेवानांगुह्यंयएवंवेदब्रह्मणोमहिमानमा
प्नोतितस्माद्ब्रह्मणोमहिमानमित्युपनिषत् २ तस्यैवंविदुषोयज्ञस्यआत्मायज
मानःश्रद्धापत्नीशरीरमिध्ममुरोवेदिर्लोमानिबर्हिर्वेदःशिखाहृदयंयूपःकाम
आज्यंमन्युःपशुस्तपोग्निर्धर्मःशमयितादक्षिणावाग्घोताप्राणउद्गाताचक्षुरध्वर्यु
र्मनोब्रह्माश्रोत्रमग्नीद्यावाध्रियतेसादीक्षायदश्नातितद्धविर्यत्पिबतितदस्यसोम
पानंयद्रमतेतदुपसदोयत्संचरत्युपविशत्युत्तिष्ठतेचसप्रवर्ग्योयन्मुखंतदा
हवनीयोयाव्याहृतिराहुतिर्यदस्यविज्ञानंतज्जुहोतियत्सायंप्रातरत्तितत्

समिधो यत्प्रातर्मध्यंदिनं च तानि सवनानि ये अहोरात्रे ते दर्शपौर्णमासौ ये अर्द्धमा



साश्च मासाश्च ते चातुर्मास्यानि ये ऋतवस्ते पशुबंधा ये संवत्सराश्च परिवत्सरा

श्च तेहर्गणाः सर्ववेदसं वा एतत्सत्रं यन्मरणं तदवभृथः एतद्वै जरामर्यमग्नि

होत्रं सत्रं य एवं विद्वानुदगयने प्रमीयते देवानामेव महिमानं गत्वा आदित्यस्य

सायुज्यं गच्छत्यथ यो दक्षिणे प्रमीयते पितॄणामेव महिमानं गत्वा चंद्रमसः सा

युज्यं गच्छत्येतौ सूर्याचंद्रमसोर्महिमानो ब्राह्मणो विद्वानभिजयति तस्मा

द्ब्रह्मणो महिमानमाप्नोति तस्माद्ब्राह्मणो महिमानमाप्नोतीत्युपनिषत् १०

इत्यथर्ववेदे महानारायणोपनिषदुत्तरा समाप्ता चत्वारिंशत् ४० कथं बं

धः कथं मोक्षः का अविद्या का विद्येति जाग्रत्स्वप्नसुषुप्तं तुरीयं च कथमयम

न्नमयः प्राणमयो मनोमयो विज्ञानमय आनंदमयः कथं कर्त्ता जीवः द्रष्टा साक्षी
कूटस्थोंतर्यामी कथं प्रत्यगात्मा परमात्मात्मा माया चेति कथमात्मैव स्थूलदेहा
दीनामात्मत्वेनाभिमन्यते सोभिमान आत्मनो बंधस्तन्निवृत्तिर्मोक्षस्तमभि
मानं कारयति या सा अविद्या सोभिमानो यया निवर्त्तते सा विद्या मन आदिच
तुर्द्दशकरणैः पुष्कलैरादित्याद्यनुगृहीतैः शब्दादीन्विषयान्स्थूलान्यदोपलभते
तदात्मनो जागरणं तद्वासनारहितश्चतुर्भिः करणैः शब्दाद्यभावेपि वासनाम
याञ्छब्दादीन्यदोपलभते तन्मनः स्वप्नं चतुर्द्दशकरणोपरमाद्विशेषविज्ञानाभा
वाद्यदा तदात्मनः सुषुप्तमवस्थात्रयाभावाद्भावसाक्षि स्वयंभावरहितं नैरंत
र्य्यं चैतन्यं यदा तदा तुरीयं चैतन्यमित्युच्यते अन्नकार्य्याणां षण्णां कोशानां समू

होन्नमयः कोश इत्युच्यते प्राणादिदशवायुभेदा अन्नमये कोशे यदा वर्त्तन्ते तदा प्रा
णमयः कोश इत्युच्यते एतत्कोशद्वयसंयुक्तं मन आदिश्चतुर्भिः करणैरात्मा शब्दा
दिविषयं संकल्पादिधर्मान्यदा करोति तदा मनोमयः कोश इत्युच्यते एतत्कोशत्रय
संयुक्तस्तत्तद्विशेषाविशेषज्ञानं यदा भासते तदा विज्ञानमयः कोश इत्युच्यते
एतत्कोशचतुष्टयं स्वकारणाविज्ञानेन वटकणिकायामिव वृक्षो यदा वर्त्तते तदा
नंदमयः कोश इत्युच्यते सुखदुःखबुद्ध्याश्रयो देहांतः कर्त्ता यदा इष्टविषये बु
द्धिः सुखबुद्धिरनिष्टविषये बुद्धिर्दुःखबुद्धिः शब्दस्पर्शरूपरसगंधाः सु
खदुःखहेतवः पुण्यपापकर्मानुसारी भूत्वा प्राप्तशरीरसंबंधयोगमप्रा
प्तशरीरसंयोगमिव कुर्वाणो यदा वर्त्तते तदोपहितत्वाज्जीव इत्युच्यते॥

मनआदिश्चप्राणादिश्चसत्वादिश्चेछादिश्चपुण्यादिश्चैतेपंचवर्गाइत्येतेषांपंचवर्गा
णांधर्मीभूतादात्मज्ञानादृतेयन्नविनश्यत्यात्महंनिधोनित्यत्वेनप्रतीयमानेआ
त्मोपाधिस्तल्लिंगशरीरं हृद्ग्रंथिरित्युच्यते तत्रयत्प्रकाश्यतेचैतन्यं सक्षेत्रज्ञ
इत्युच्यतेज्ञातृज्ञानज्ञेयानामाविर्भावतिरोभावज्ञातास्वयमाविर्भावतिरोभा
वहीनःस्वयंज्योतिःससाक्षीत्युच्यतेब्रह्मादिपिपीलिकापर्यंतप्राणिबुद्धिष्वव
शिष्टतयोपलभ्यमानःसर्वप्राणिबुद्धिस्थोयदातदाकूटस्थइत्युच्यतेकूटस्था
द्युपरहितभेदानांस्वरूपलाभहेतुर्भूत्वामणिगणेसूत्रमिवसर्वक्षेत्रेष्व
नुस्यूतत्वेनयदाप्रकाशतेआत्मातदांतर्यामीत्युच्यतेसर्वोपाधिविनिर्मु
क्तःसुवर्णघनवद्विज्ञानचिन्मात्रंस्वरूपस्वभावआत्मायदावभासतेतदात्वंपदार्थः

१२०

120

त्यगात्मेत्युच्यते सत्यं ज्ञानमनंतमानंदं ब्रह्म सत्यमविनाशिनाम देशकाल वस्तुनिमित्तेषु विनश्यत्सु यन्न विनश्यति तत्तदविनाशज्ञानमित्युत्पत्तिविनाशरहितं चैतन्यं ज्ञानमित्यभिधीयते अनंतं नाम मृद्धिकारेषु मृद्धिव सुवर्णविकारेषु सुवर्णमिवतंतुकार्येषु तंतुरिवाव्यक्तादिसृष्टिप्रपंचेषु पूर्वं व्यापकं चैतन्यमनंतमित्युच्यते आनंदो नाम सुखचैतन्यस्वरूप अपरिमितानंदसमुद्र अविशिष्टसुखस्वरूपश्चानंद इत्युच्यते एतद्वस्तुचतुष्टयं यस्य लक्षणं देशकालनिमित्तेष्वव्यभिचारि सतत्पदार्थः परमात्मा परं ब्रह्मेत्युच्यते त्वंपदार्थादौपाधिकात्तत्पदार्थादौपाधिकाद्विलक्षण आकाशवत्सूक्ष्मः केवलः सत्तामात्रात्तत्पदार्थस्यात्मेत्युच्यते अनादिरंतर्व

१२०

तीप्रमाणप्रमाणसाधारणासतीनासतीनसदसती स्वयमधिकाद्विकारहे तो नि
रूप्यमाणे असतीअनिरूप्यमाणेसती ~~~~~~~लेद्दरणाभ्यन्यासामायेत्युच्यते
॥इत्यथर्ववेदेसर्वोपनिषत्सारंसमाप्तमेकचत्वारिंशत॥४१॥ गौतम उवाच॥
भगवन्सर्वधर्मज्ञसर्वशास्त्रविशारद ब्रह्मविद्याप्रबोधोहि केनोपायेनजायते स
नत्सुजात उवाच॥ विचार्यसर्ववेदेषुमतंज्ञात्वापिनाकिनः पार्वत्याकथितंतत
त्वंशृणुगौतमतन्मम अनाख्येयमिदंगुह्यंयोगिनांकोशसन्निभं हंसस्यग
तिविस्तारंभुक्तिमुक्तिफलप्रदं अथहंसपरमहंसनिर्णयंव्याख्यास्यामः ब्रह्म
चारिणेशांतायदांतायगुरुभक्ताय हंसहंसेति सदायं सर्वेषु देहेषु व्याप्तोवर्त
ते यथाह्यग्निः काष्ठेषु तिलेषुतैलमिव तंविदित्वानमृत्युमेति गुदमव

छम्या धाराद्दायुमुत्थाप्यस्वाधिष्ठानं त्रिः प्रदक्षिणीकृत्य मणिपूरकंच गत्वा ना
हतमतिक्रम्य विशुद्धौ प्राणान्निरुध्याज्ञामनुध्यायन् ब्रह्मरंध्रं ध्यायंस्त्रिमा
त्रोहमित्येवं सर्वदा ध्यायन्नथो नादमाधाराद् ब्रह्मरंध्रपर्यंतं शुद्धस्फटिकसंका
शं स वै ब्रह्म परमात्मेत्युच्यते १ अथ हंस ऋषिः अव्यक्तगायत्री छंदः परमहं
सो देवता अहमिति बीजं स इति शक्तिः सोहमिति कीलकं षट संख्या अहो
रात्रयोरेकविंशति सहस्राणि षट् शतान्यधिकानि भवंति सोमाय स्वर्याय
निरंजनाय निराभासाय तन्नः सूक्ष्मः प्रचोदयादित्यग्नीषोमाभ्यां वौ
षट् हृदयाद्यंगन्यासकरन्यासौ भवतः एवं कृत्वा हृदये ष्ट दले हंसात्मानं
ध्यायेत् अग्नीषोमौ पक्षावोंकारः शिरो बिंदुस्तु नेत्रं मुखे रुद्राणी च

रसौबाहूकालश्चाग्निश्चोभेपार्श्वेभवतः पश्यतिनागश्चशिखो भयपार्श्वेभवतए
षोसौपरमहंसोभानुकोटिप्रतीकाशोयेनेदंव्याप्तंतस्याष्टधावृत्तिर्भवति पूर्वदलेपुण्ये
मतिराग्नेय्यांनिद्रालस्यादयोभवंति याम्येक्रूरेमतिर्नैरृतेपापेमनीषावारुण्यांक्री
डावायव्येगमनादौबुद्धिः सौम्येरतिप्रीतिरीशानेद्रव्यादानेमध्येवैराग्यकेसरेजाग्रद
वस्थाकर्णिकायांस्वप्नंलिंगेसुषुप्तिः पद्मत्यागेतुरीयंयदाहंसोनादेलीनोभवति
तुर्यातीतमुन्मननामजपोपसंहारमित्यभिधीयते एवंसर्वंहंसवशात्तस्मान्म
नोविचार्यतेसएवजपकोट्यांनादमनुभवत्येवंसर्वंहंसवशान्नादोदशविधो
जायतेचिणीतिप्रथमंचिंचिणीतिद्वितीयंघंटानादस्तृतीयंशंखनादश्चतुर्थंपं
चमस्तंत्रीनादःषष्ठस्तालनादःसप्तमोवेणुनादोष्टमोमृदंगनादोनवमोभेरी

१२२

122

नादो दशमो मेघनादो नवमं परित्यज्य दशममेवाभ्यसेत् प्रथमे चिंचिणीगात्रं द्वि
तीये गात्रभंजनं तृतीये खेदनं याति चतुर्थे कंपते शिरः पंचमे स्रवते तालु षष्ठे
मृतनिषेवणं सप्तमे गूढविज्ञानं परावाचा तथाष्टमे अदृश्यं नवमे देहं दिव्यं चक्षुस्त
थामलं दशमे परमं ब्रह्म भवेद् ब्रह्मात्मसन्निधौ तस्मिन्मनो विलीयते मनसि
संकल्पे दग्धे पुण्यपापे सदाशिवः शक्त्यात्मा सर्वत्रावस्थितः स्वयंज्योतिः शुद्धो बु
द्धो नित्यो निरंजनः शांतः प्रकाशित इत्योंवेदप्रवचनं वेदप्रवचनमिति. २
इत्यथर्ववेदे हंसोपनिषत्समाप्ता द्वाचत्वारिंशत् ४२ अथ योगिनां परमहंसा
नां कोयं मार्गस्तेषां का स्थितिरिति नारदो भगवंतमुपगम्योवाच तं भगवा
नाह योयं परमहंसमार्गो लोकेषु दुर्लभतरो न तु बाहुल्यो यद्येकोपि

१२२

भवतिसएवनित्यपूतस्य इतिसएववेदपुरुषइति विदुषोमन्यंते महापुरुषोयच्चित्तं
तत्सदामध्येवावतिष्ठते तस्मादहंचतस्मिन्नेवाचस्थीयते असौस्वपुत्रमित्रकलत्रबं
धादीछिखायज्ञोपवीतंचयागस्वाध्यायंचसर्वकर्माणि संन्यस्यायंब्रह्मांडंचहि
त्वाकौपीनदंडमाछादनंचस्वशरीरस्योपभोगार्थायलोकस्योपचारायचपरि
गृहीतच्चनमुख्योस्तिकोमुख्यइति चेदयंमुख्योनदंडंनशिखानयज्ञोपवीतं
नास्वाध्यायंचनाछादं चेतिपरमहंसोनशीतं नचोस्मंनसुखंनदुःखंन
मानापमानेचषडूर्मिरहितंनशब्दंनस्पर्शंनरूपंनरसंनगंधंनचमनोप्येवं
निंदागर्वमत्सरदंभदर्पेछाद्वेषसुखदुःखकामक्रोधरोषलोभमोहम
दहर्षासूयाहंकारादींश्चहित्वा स्ववपुःकुणपमिवदृश्यतएतद्दपुरप

ध्वस्तासंशयविपरीतमिथ्याज्ञानानां यो हेतुस्तेन नित्यनिवृत्तस्तन्नित्यपूतस्य
स्तस्य स्वयमेव स्थितिरितशांतमचंचलमद्वयानंदं विज्ञानघनएवास्मि त
देवमोंपरमंधाम तदेव शिखा च तदेवोपवीतं च यदा परेनिरंतरंतुहःस्थः तदे
वावस्थानं परमात्मात्मनोरेकत्वज्ञानेन तयोर्भेद एक एव विघ्नो या सा संध्या
सर्वान्कामान्परित्यज्याद्वैते परमस्थितिः ज्ञानदंडो धृतो येन एकदंडी स उ
च्यते काष्ठदंडो धृतो येन सर्वाशी ज्ञानवर्जितः स याति नरकान्घोरान्महारौरव
मेव च इदमंतरं ज्ञात्वा स परमहंस आसावरो न नमस्कारो न स्वधाकारो न स्तुति
र्न वषट्कारो भवेद्भिक्षुः नावाहनं न विसर्जनं न मंत्रं न ध्यानं नोपवासनं च न ल
क्ष्यं नालक्ष्यं न पृथङ्नापृथङ्नाहं न त्वं चान्तिके तस्थितिरेव स भिक्षुः हाटका

१२३

दीनां न परिग्रहेन्नावलोकनं च अथावलोकनमात्रेण न बाधकं इति चेत् तद्बाध
कोस्त्येव यस्माद्भिक्षुर्हिरण्यं रसेन दृष्टं स ब्रह्महा भवेद्यस्माद्भिक्षुर्हिरण्यं रसेन
स्पृष्टं स पौल्कसो भवेत् यस्माद्भिक्षुर्हिरण्यं रसेन ग्राह्यं स आत्महा भवेत् यस्मा
द्भिक्षुर्हिरण्यं येन दृष्टं च न स्पृष्टं च न ग्राह्यं च सर्वान्कामानात्मनो गतान्व्यावर्तेर
न्दुःखेनोद्वेगः सुखेन स्पृहात्यागो रागे सर्वत्र शुभाशुभयोरनभिस्नेहो न द्वेष्टि न प्रमो
दश्च सर्वेषामिंद्रियाणां गतिरूपं रमते ज्ञाने स्थिरस्थः सदा आत्मा आत्मन्येवाव
तिष्ठते स यतिः कथ्यते स एव योगी स एव ज्ञानी च यत्पूर्णानंदैकरूपरसबोधस्त
द्ब्रह्माहमिति कृतकृत्यो भवति ॥ १ ॥ इत्यथर्ववेदे परमहंसोपनिषत्समाप्ता त्रयश्च
त्वारिंशत् ४३ ॐ शन्नो मित्रः शं वरुणः शन्नो भवत्वर्यमा शन्न इंद्रो बृह

१२४

स्पतिः शन्नो विस्नुरुरुक्रमः नमो ब्रह्मणे नमस्ते वायो त्वमेव प्रत्यक्षं ब्रह्मासि त्वामे
व प्रत्यक्षं ब्रह्म वदिष्यामि ऋतं वदिष्यामि सत्यं वदिष्यामि तन्मामवतु तद्वक्तारमव
त्ववतु मामवतु वक्तारं शांतिः शांतिः शांतिः शिक्षां व्याख्यास्यामो वर्णः स्वर
मात्रा बलं साम संतान इत्युक्तः शिक्षाध्यायः सह नो यशः सह नो ब्रह्मवर्चस
मथातः संहिताया उपनिषदं व्याख्यास्यामः पंचस्वधिकरणेषु अधिलोकमधि
ज्योतिषमधिविद्यमधिप्रजमध्यात्मं ता महासंहिता इत्याचक्षते अ
थाधिलोकं पृथिवी पूर्वरूपं द्यौरुत्तररूपमाकाशः संधिर्वायुः संधानमि
त्यधिलोकमथाधिज्योतिषमग्निः पूर्वरूपमादित्य उत्तररूपमापः
संधिर्वैद्युतः संधानमिति अधिज्योतिषमथाधिविद्यमाचार्यः पूर्व

१२४

रूपमंतेवास्युत्तररूपं विद्यासंधिः प्रवचनं संधानमित्यधिविद्यमथाधिप्रज
ननं माता पूर्वरूपं पितोत्तररूपं प्रजासंधिः प्रजननं संधानमित्यधिप्रजन
नमथाध्यात्ममधराहनुः पूर्वरूपमुत्तराहनुरुत्तररूपं वाक् संधिर्जिह्वा संधान
मित्यध्यात्ममितीमा महासंहिता य एवमेता महासंहिता व्याख्याता वेद संधीयते प्र
जया पशुभिर्ब्रह्मवर्चसेनान्नाद्येन स्वर्गेण लोकेन २ यश्छंदसामृषभो विश्वरू
पः छंदोभ्योध्यमृतात्संबभूव स मेंद्रो मेधया स्पृणोत्वमृतस्य देव धारणो भू
यासं शरीरं मे विचर्षणं जिह्वा मे मधुमत्तमा कर्णाभ्यां भूरि विश्रुवं ब्रह्मणः
कोशोसि मेधया पिहितः श्रुतं मे गोपाय आवहंती वितन्वाना कुर्वाणा चिर
मात्मनः वासांसि मम गावश्चान्नपाने च सर्वदा ततो मे श्रियमावह लोम

१२५ 125

शां पंशुभिः राह स्वाहा आमायंतु ब्रह्मचारिणः स्वाहा समायंतु ब्रह्मचारिणः
स्वाहा प्रमायंतु ब्रह्मचारिणः स्वाहा अमायंतु ब्रह्मचारिणः स्वाहा विमायं
ब्रह्मचारिणः स्वाहा प्रमायंतु ब्रह्मचारिणः स्वाहा अमायंतु ब्रह्मचारिणः
स्वाहा समायंतु ब्रह्मचारिणः स्वाहा यशोजनेसानिश्वायस्वाहा श्रेयत्वस्यु
सोमानि स्वाहा तंत्वाभगवाप्रविशानि स्वाहा समाभगवः प्रविश स्वाहा त
स्मिन्सहस्रशाखे हिरण्यमहं त्वयि मृते स्वाहा यथापः प्रवतायंति यथामासा
अहर्जरं एवं मां ब्रह्मचारिणो धातुरायांतु सर्वतः स्वाहा प्रतिवेशोसि प्रमाद्याहि
प्रमापद्यस्व भूर्भुवः स्वरिति वा एतास्तिस्रो व्याहृतयः तासामुहस्मैतां चतु
र्थीमाहाचमस्यः प्रवेदयते महइति तद्ब्रह्म स आत्मा अंगान्यन्या देवताः मह

१२५

रिति वा अयं लोको भुव इत्यंतरिक्षलोकः स्वरित्यसौ लोको मह इत्यादित्य आ
दित्येन वाव सर्वे लोका महीयंते भूरिति वा अग्निः भुव इति वायुः स्वरादित्यो मह इति
चंद्रमाश्चंद्रमसा सर्वाणि ज्योतींषि मह इति ब्रह्म ब्रह्मणा वाव सर्वे वेदा महीयंते भूरिति वै
प्राणो भुव इत्यपानः स्वरिति व्यानो मह इत्यन्नमन्नेन वाव सर्वे प्राणा महीयंते ता वा ए
ताश्चतस्रश्चतुर्धा चतस्रश्चतस्रो व्याहृतयस्ता यो वेद स वेद ब्रह्म सर्वेऽस्मै देवा ब
लिमावहंति २ स एषोंतर्हृदय आकाशस्तस्मिन्नयं पुरुषो मनोमयोऽमृतो हिरण्
मयोंतरेण तालुके य एष स्तन इवावलंबते सेंद्रयोनिर्यत्रासौ केशांतो विवर्तते व्य
पोह्य शीर्षकपाले भूरित्यग्नौ प्रतितिष्ठति भुव इति वायौ स्वरित्यादित्ये मह इ
ति ब्रह्मण्याप्नोति स्वाराज्यमाप्नोति मनसस्पतिं वाक्पतिश्चक्षुष्पतिः

श्रोत्रपतिर्विज्ञानपतिरेतत्ततो भवत्याकाशशरीरं ब्रह्म सत्यात्म प्राणारामं मन


आनंदं शांतिसमृद्धममृतमिति प्राचीनयोग्योपास्स्व भायावमृतमेकं च पृथिव्यं
तरिक्षं द्यौर्दिशोवांतरदिशा अग्निर्वायुरादित्यश्चंद्रमा नक्षत्राण्याप ओषध
यो वनस्पतय आकाश आत्मा इत्यधिभूतमथाध्यात्मं प्राणोपानो व्यान उदानः
समानश्चक्षुः श्रोत्रं मनो वाक् त्वक् चर्म मांसं स्नाव्वस्थि मज्जा एतदधिविधाय ऋषि
रवोचत्पांक्तं वा इदं सर्वं पांक्तेनैव पांक्तं स्पृणोतीति॥ ॐ मिति ब्रह्म ॐ मितीदं सर्वं मो
मित्येतदनुकृतिर्ह स्म वा अप्योश्रावयेत्याश्रावयंत्योमिति सामानि गायंत्योमिति
शस्त्राणि शंसंत्योमित्यध्वर्युः प्रतिगरं प्रतिगृणात्योमिति ब्रह्मा प्रस्तोत्योमित्यग्निहोत्रम
नुजानात्योमिति ब्राह्मणः प्रवक्ष्यन्नाह ब्रह्मोपाप्नुवानीति ऋतं च स्वाध्यायप्र

वचनेचातिथयश्चस्वाध्यायप्रवचनेचप्रजाचस्वाध्यायप्रवचनेचप्राजापत्यंच
स्वाध्यायप्रवचनेचतपश्चस्वाध्यायप्रवचनेचाग्निहोत्रंचस्वाध्यायप्रवचनेचद
मश्चस्वाध्यायप्रवचनेचशमश्चस्वाध्यायप्रवचनेचाग्नयश्चस्वाध्यायप्रवचनेच
सत्यमितिसत्यवचाराथीतरस्तपइतितपोनित्यःपौरुशिष्टिः अहंवृक्षस्यरेरि
वाकीर्त्तिःपृष्ठंगिरेरिवऊर्ध्वपवित्रोवाजिनीवस्वमृतमस्मिद्रविणंसुवर्चसंसुमेधा
अमृतोक्षितइतित्रिशंकोर्वेदानुशासनं ६ वेदमनूच्याचार्योन्तेवासिनमनुशा
स्तिसत्यंवदधर्मंचरस्वाध्यायान्माप्रमदआचार्यायप्रियंधनमाहृत्यप्रजातं
तुमाव्यवच्छेत्सीः॥सत्यान्नप्रमदितव्यंधर्मान्नप्रमदितव्यंकुशलान्नप्रमदि
तव्यंभूत्यैनप्रमदितव्यंस्वाध्यायप्रवचनाभ्यांनप्रमदितव्यंदेवपितृका

१२८

र्याभ्यांनप्रमदितव्यं मातृदेवोभवपितृदेवोभवाचार्यदेवोभवातिथिदेवोभव यान्य
नवद्यानिकर्माणितानिसेवितव्यानिनोइतराणि यान्यस्माकंसुचरितानितानि
त्वयोपास्यानिनोइतराणियेकेचास्मच्छ्रेयांसोब्राह्मणास्तेषांत्वयासनेनप्रश्वसितव्यं
श्रद्धयादेयमश्रद्धयादेयंश्रियादेयंह्रियादेयंभियादेयंसंविदादेयमथयदितेकर्मवि
चिकित्सावृत्तिविचिकित्सावास्याद्येतत्रब्राह्मणाः संमर्शिनोयुक्ताअयुक्ताअरू
क्षाधर्मकामाःस्युर्यथातेतत्रवर्तेरंस्तथातत्रवर्तेथाअथाभ्याख्यातेषुयेतत्रब्राह्म
णाःसंमर्शिनः भू द ब आदेशएषउपदेशःएषावेदोपनिषदेतदनुशासनमेव
मुपासितव्यमेवमुचैतदुपास्यं शन्नोमित्रःशंवरुणःशन्नोअस्त्वर्यमा॥११॥श
न्नइंद्रबृहस्पतिःशन्नोविष्णुरुरुक्रमः॥ नमोब्रह्मणेनमस्तेवायोत्वमेवप्र

१२८

त्यक्षंब्रह्मावादिषमृतमवादिषंसत्यमवादिषंतन्मामावीत्तद्वक्तारमावीदावीन्मामावीद्वक्तारं
शांतिःशांतिःशांतिः सहनाववतुसहनौनौभुनक्तुसहवीर्यंकरवावहैतेजस्विनावधीत
मस्तुमाविद्विषावहैशांतिःशांतिःशांतिः ७ ब्रह्मविदाप्नोतिपरंतदेषाभ्युक्तासत्यंज्ञा
नमनंतंब्रह्मयोवेदनिहितंगुहायांपरमेव्योमन्सोश्नुतेसर्वान्कामान्सहब्रह्मणावि
पश्चितेति तस्माद्वाएतस्माएतस्मादात्मनआकाशःसंभूतआकाशाद्वायुर्वायोर
ग्निरग्नेरापअद्भ्यःपृथिवीपृथिव्याॐषधयॐषधीभ्योन्नमन्नात्पुरुषःसवाएष
पुरुषोन्नरसमयस्तस्येदमेवशिरोअयंदक्षिणःपक्षोयमुत्तरःपक्षोयमात्माइदं
पुच्छंप्रतिष्ठा तदप्येतेश्लोकाभवंति अन्नाद्वैप्रजाःप्रजायंतेयाःकाश्चपृथिवी
श्रिताः अथोन्नेनैवजीवंत्यथैतदपियंत्यंततः अन्नंहिभूतानांज्येष्ठंतस्मा

सर्वौषधमुच्यते सर्वं वै तेऽन्नमाप्नुवंति येऽन्नं ब्रह्म उपासते अन्नाद्भूतानि जायं
ते जातान्यन्नेन वर्द्धंते अद्यतेत्ति च भूतानि तस्मादन्नं तदुच्यत इति तस्माद्वै त
स्मादन्नरसमयादन्योंतर आत्मा प्राणमयस्तेनैष पूर्णः स वा एष पुरुषविध
एव तस्य पुरुषविधतामन्वयं पुरुषविधस्तस्य प्राण एव शिरः व्यानो दक्षिणः
पक्षोपान उत्तरः पक्ष आकाश आत्मा पृथिवी पुच्छं प्रतिष्ठा तदप्येष श्लोको भव
ति ८ प्राणं देवा अनुप्राणंति मनुष्याः पशवश्च ये प्राणो हि भूतानामायुस्त
स्मात्सर्वायुषमुच्यते सर्वमेव त आयुर्यंति ये प्राणं ब्रह्म उपासते प्राणो हि भू
तानामायुस्तस्मात्सर्वायुषमुच्यते इति तस्यैष एव शरीर आत्मा यः पूर्वस्य
तस्माद्वा एतस्मात्प्राणमयादन्योंतर आत्मा मनोमयस्तेनैष पूर्णः स वा

एवपुरुषविधएवतस्यपुरुषविधतामन्वयंपुरुषस्तस्ययजुरेवशिरोऋग्द
क्षिणः पक्षः सामोत्तरः पक्षआदेशआत्माअथर्वाङ्गिरसः पुच्छंप्रतिष्ठा तदप्येषश्लो
कोभवति यतोवाचोनिवर्त्तन्तेअप्राप्यमनसासह आनंदंब्रह्मणोविद्वान्नबिभे
तिकुतश्चनेति तस्यैषएवशारीरआत्मायः पूर्वस्यतस्माद्वाएतस्मान्मनोमयाद
न्योंतरआत्माविज्ञानमयस्तेनैषपूर्णः सवाएषपुरुषविधएवतस्यपुरुषविधे
तामन्वयंपुरुषविधस्तस्यश्रद्धैवशिरोऋतंदक्षिणः पक्षः सत्यमुत्तरः पक्षोयो
गआत्मामहः पुच्छंप्रतिष्ठा तदप्येषश्लोकोभवति विज्ञानंयज्ञंतनुतेकर्माणि
तनुतेपिच विज्ञानंदेवाःसर्वेब्रह्मज्येष्ठमुपासते विज्ञानंब्रह्मचेद्वेद तस्मा
च्चेन्नप्रमाद्यति शरीरेपाप्मनोहित्वासर्वान्कामान्समश्नुते इतितस्यैषएव

शारीर आत्मा यः पूर्वस्य तस्माद्वै तस्माद्विज्ञानमयादन्योंतर आत्मा आनंदमय
स्तेनैष पूर्णः स वा एष पुरुषविध एव तस्य पुरुषविधतामन्वयं पुरुषविधस्त
स्य प्रियमेव शिरो मोदो दक्षिणः पक्षः प्रमोद उत्तरः पक्ष आनंद आत्मा ब्रह्म
पुच्छं प्रतिष्ठा तदप्येष श्लोको भवति ९ असन्नेव स भवत्यसद्ब्रह्मेति वेद चेत॥
अस्ति ब्रह्मेति चेद्वेद संतमेनं ततो विदुरिति तस्यैष एव शारीर आत्मा पूर्वस्या
थातोनुप्रश्न उताविद्वानमुं लोकं प्रेत्य न कश्चन गच्छती त्यहो विद्वानमुं लोकं प्रे
त्य कश्चित्समश्नुते १० सोकामयत बहुस्यां प्रजायेयेति स तपोतप्यत स तप
स्तप्त्वा इदं सर्वमसृजत यदिदं किंचत तत्सृष्ट्वा तदेवानुप्राविशत् तदनुप्रविश्य
सच्च त्यच्चाभवन्निरुक्तं चानिरुक्तं च निलयनं चानिलयनं च विज्ञानं

चाविज्ञानंचसत्यंचानृतंचसत्यमभवद्यदिदं किंचतत्सत्यमित्याचक्षते तदप्येष
श्लोकोभवति ११ असद्वाइदमग्रआसीत्ततोवैसदजायत तदात्मानंस्वयमकुरु
ततस्मात्तत्सुकृतमुच्यतइतियद्वैतत्सुकृतं रसोवैसः रसंह्येवायंलब्ध्वानंदीभव
तिकोह्येवान्यात्कः प्राण्याद्यदेषआकाशआनंदोनस्यादेषह्येवानंदयातियदा
ह्येवैषएतस्मिन्नदृश्येनात्म्येनिरुक्तेनिलयनेभयंप्रतिष्ठांविंदतेअथसोभयं
गतोभवतियदाह्येवैषएतस्मिन्नुदरमंतरंकुरुतेअथतस्यभयंभवतिनत्वेव
भयंविदुषोमन्वानस्य तदप्येषश्लोकोभवति १२ भीषास्माद्वातःपवतेभी
षोदेतिसूर्यः भीषास्मादग्निश्चेंद्रश्चमृत्युर्धावतिपंचमइति सैषानंदस्य
मीमांसाभवतियुवास्यात्साधुयुवाध्यायकः आशिष्ठोद्रढिष्ठोबलिष्ठस्

१३०

130

स्येयंपृथिवीसर्वाविंत्तस्यपूर्णास्यात सएकोमानुषआनंदस्तेयेशतंमानुषाआनं
दाःसएकोमनुष्यगंधर्वाणामानंदःश्रोत्रियस्यचाकामहतस्यतेयेशतंमनुष्य
गंधर्वाणामानंदाःसएकोदेवगंधर्वाणामानंदःश्रोत्रियस्यचाकामहतस्यते
येशतंदेवगंधर्वाणामानंदाःसएकःपितृणांचिरलोकानामानंदःश्रोत्रिय
स्यचाकामहतस्यतेयेशतमाजानजानांदेवानामानंदाःसएकःकर्मदेवाना
मानंदोयेकर्मणादेवानपियंतिश्रोत्रियस्यचाकामहतस्यतेयेशतंकर्मदेवा
नामानंदाःसएकोदेवानामानंदःश्रोत्रियस्यचाकामहतस्यतेयेशतमिंद्र
स्यानंदाःसएकःप्रजापतेरानंदःश्रोत्रियस्यचाकामहतस्यतेयेशतंप्र
जापतेरानंदाःसएकोब्रह्मणआनंदःश्रोत्रियस्यचाकामहतस्यस

१३०

यश्चायंपुरुषेयश्चासावादित्येसएकः सयएवंविदस्माल्लोकात्प्रेत्यएतमन्नमय
मात्मानमुपसंक्रामत्येतंप्राणमयमात्मानमुपसंक्रामत्येतंमनोमयमात्मान
मुपसंक्रामति एवंविज्ञानमयमात्मानमुपसंक्रामति एवमानंदमयमात्मान
मुपसंक्रामतितदप्येषश्लोकोभवति ८ यतोवाचानिवर्त्ततेअप्राप्यमनसासह॥
आनंदंब्रह्मणोविद्वान्नबिभेतिकुतश्चनेति सयएवंविद्वानेतंहवावनतपति किं
महंसाधुनाकरवंकिमहंपापमकरवमितिसयएवंविद्वानेतआत्मानंस्पृणुते
उभेह्येवैषएतेआत्मानंस्पृणुतेयएवंवेदेत्युपनिषत् ९ इत्यथर्ववेदेआनं
दवल्ल्युपनिषत्समाप्ता च तुश्चत्वारिंशत् ४४ ॐ भृगुर्वैवारुणिर्वरुणं
पितरमुपससारअधीहिभगवोब्रह्मेतितस्मादेतत्प्रोवाचान्नंप्राणंचक्षुः

१३१

131

श्रोत्रं मनो वाचमिति तं होवाच यतो वा इमानि जायंते येन जातानि जीवंति यत्प्रयंत्य
भिसंविशंति तद्विजिज्ञासस्व तद्ब्रह्मेति स तपोतप्यत स तपस्तप्त्वा अन्नं ब्रह्मे
ति व्यजानत् अन्नाद्ध्येव खल्विमानि भूतानि जायंते अन्नेन जातानि जीवंत्यन्नं प्र
यंत्यभिसंविशंतीति तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्र
ह्मेति तं होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति स तपोतप्यत स तप
स्तप्त्वा प्राणो ब्रह्मेति व्यजानात् प्राणाद्ध्येव खल्विमानि भूतानि जायंते प्राणेन
जातानि जीवंति प्राणं प्रयंत्यभिसंविशंति तद्विज्ञाय पुनरेव पितरमुपस
सार अधीहि भगवो ब्रह्मेति तं होवाच तपसा ब्रह्म विजिज्ञासस्व तपो
ब्रह्मेति स तपोतप्यत स तपस्तप्त्वा मनो ब्रह्मेति व्यजानात् मनसो ह्येव

१३१

खल्विमानि भूतानि जायंते मनसा जातानि जीवंति मनः प्रयंत्यभिसंविशंतीति त
द्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति तं होवाच तपसा ब्र
ह्म विजिज्ञासस्व तपो ब्रह्मेति स तपोऽतप्यत स तपस्तप्त्वा विज्ञानं ब्रह्मेति व्यजाना
द्विज्ञानाद्ध्येव खल्विमानि भूतानि जायंते विज्ञानेन जातानि जीवंति विज्ञानं प्रयं
त्यभिसंविशंतीति तद्विज्ञाय पुनरेव वरुणं पितरमुपससार अधीहि भगवो ब्र
ह्मेति तं होवाच तपसा ब्रह्म विजिज्ञासस्व तपो ब्रह्मेति स तपोऽतप्यत स तपस्त
प्त्वा आनंदो ब्रह्मेति व्यजानादानंदाद्ध्येव खल्विमानि भूतानि जायंते आनं
देन जातानि जीवंति आनंदं प्रयंत्यभिसंविशंतीति सैषा भार्गवी वारुणी विद्या
परमे व्योमन्प्रतिष्ठिता य एवं वेद प्रतितिष्ठत्यन्नवानन्नादो भवति महा

न्भवतिप्रजयापशुभिर्ब्रह्मवर्चसेनमहान्कीर्त्या २ अन्नंननिंद्यात्तद्व्रतंप्राणो
वाअन्नंशरीरमन्नादंप्राणेशरीरंप्रतिष्ठितंशरीरेप्राणःप्रतिष्ठितस्तदेतदन्न
मन्नेप्रतिष्ठितंसयएतदन्नमन्नेप्रतिष्ठितंवेदप्रतितिष्ठत्यन्नवानन्नादोमहान्भवतिप्र
जयापशुभिर्ब्रह्मवर्चसेनमहान्कीर्त्या २ अन्नंनपरिचक्षीततद्व्रतमापोवाअन्नं
ज्योतिरन्नादमप्सुज्योतिःप्रतिष्ठितंज्योतिष्यापःप्रतिष्ठितास्तदेतदन्नमन्नेप्र
तिष्ठितंसयएतदन्नेप्रतिष्ठितंवेदप्रतितिष्ठत्यन्नवानन्नादोभवतिमहान्
भवतिप्रजयापशुभिर्ब्रह्मवर्चसेनमहान्कीर्त्या ३ अन्नंबहुकुर्वीततद्व्रतं
पृथिवीवाअन्नमाकाशोन्नादःपृथिव्यामाकाशःप्रतिष्ठितआकाशेपृथि
वीप्रतिष्ठितासयएतदन्नमन्नेप्रतिष्ठितंवेदप्रतितिष्ठत्यन्नवानन्नादोभवति

महान्भवति प्रजया पशुभिर्ब्रह्मवर्चसेन महान्कीर्त्त्या ४ नकंचन वसतौ प्रत्या
चक्षीत तद्व्रतं तस्माद्यया कया च विधया बह्वन्नं प्राप्नुयादारामन्नमित्याचक्ष
तएतद्वै मुखतोन्नं राधं मुखतोस्मादन्नं राध्यत एतद्वै मध्यतोन्नं राद्धं मध्यतोस्मा
दन्नं राध्यत एतद्वा अंततोन्नं राद्धमंततोस्मादन्नं राध्यते यएवंवेद क्षेम इति वाचि
योगक्षेम इति प्राणापानयोः कर्मेति हस्तयोर्गतिरिति पादयोर्विमुक्तिरिति पाया
विति मानुषीसंज्ञा अथातो दैवीस्तृप्तिरिति वृष्टौ बलमिति विद्युति यश इति पशु
षु ज्योतिरिति नक्षत्रेषु प्रजापतिरमृतमानंद इत्युपस्थे सर्वमित्याकाशे तत्प्रति
ष्ठेत्युपासीत प्रतिष्ठावान्भवति तन्मह इत्युपासीत महान्भवति तमनोवान्भ
वति तन्नम इत्युपासीत नमस्यंतेऽस्मै कामास्तद्ब्रह्मेत्युपासीत ब्रह्मवान्भ

१३३

133

वतितद्ब्रह्मणः परिमर इत्युपासीत परि म्रियंते द्विषंतः सपत्नाः परि प्रियाभ्रात्
व्याः स यश्चायं पुरुषे यश्चासावादित्ये स एकः स य एवं वेदास्माल्लोकात्प्रेत्य एतम
न्नमयमात्मानमुपसंक्रम्य एतं प्राणमयमात्मानमुपसंक्रम्य एतं मनोमयमा
त्मानमुपसंक्रम्य एतं विज्ञानमयमात्मानमुपसंक्रम्य एतमानंदमयमात्मा
नमुपसंक्रम्य इमाल्लोकान्कामरूप्यनुसंचरन्नेतत्सामगायन्नास्ते ५ हाइवु
हाइवु हाइवु अहमन्न अहमन्न महमन्नादो हमन्नादो हमन्नादो हं श्लोक
कृदहं श्लोककृ दहमस्मि प्रथमजा ऋ तस्य पूर्वं देवेभ्यो अमृतस्या नाभि यो
मा ददाति स इदेव मावहमन्नमदंतमद्मि अहं विश्वं भुवनमभ्यभवां सुवर्ण ज्यो
तिर्य एवं वेदेत्युपनिषत् ६ इत्यथर्ववेदे भृगुवल्ली उपनिषत्समाप्ता पंच च

१३३

त्वारिंशत॥४५॥ ॐ ब्रह्मविद्यां प्रवक्ष्यामि ब्रह्मा नारदाय नारदो बृहत्सेनाय बृहत्से
नइंद्राय इंद्रो भारद्वाजाय भारद्वाजो जीवितुकामेभ्यः शिष्येभ्यः प्रायच्छदेतत्कारीम
कारी विषहरी विषरूपिणी विषसर्पिणी हतं नष्टं विषं हतमिंद्रस्य वज्रेण स्वाहा
नागानां सर्पाणां वृश्चिकानां लूतानां प्रलूतानां गृहगोधानां मूषकानां॥ यदि
नंतकद्रूतस्त्वं यदि वा नंतकः स्वयं यदि वासुकिद्रूतस्त्वं यदि वा वासुकिः स्वयं यदि
तक्षकद्रूतस्त्वं यदि वा तक्षकः स्वयं यदि कर्कोटद्रूतस्त्वं यदि कर्कोटकः स्वयं॥
यदि शंखपुलिकद्रूतस्त्वं यदि शंखपुलिकः स्वयं यदि पद्मकद्रूतस्त्वं यदि वा प
द्मकः स्वयं॥ यदि महापद्मकद्रूतस्त्वं यदि महापद्मकः स्वयं॥ यद्येलापत्रकद्रूतस्त्वं
यदि वेलापत्रकः स्वयं यदि महेलापुत्रकद्रूतस्त्वं यदि वा महेलापुत्रकः स्वयं॥

१३४

134

यदि किं बलाश्वतर दूतस्त्वं यदि वा केवलाश्वतरः स्वयं यदि कालिक दूतस्त्वं यदि वा
कालिकः स्वयं य इमां महाविद्याममावास्यायां मृण्मया द्वादश वर्षेन तं दशंति सर्पाः
य इमां महाविद्याममावास्यायामधीयानो धारयेद्यावज्जीवं न तं दशंति सर्पाः अ
ष्टौ ब्राह्मणान्ग्राहयित्वा तृणेन मोक्षयति काष्ठेन मोक्षयति शतं ब्राह्मणान्ग्रा
हयित्वा चक्षुषा मोक्षयति चक्षुषा मोक्षयतीत्याह भगवान्ब्रह्मा आह भगवान्
ब्रह्मेति गारुडोपनिषत्॥ इत्यथर्ववेदे गारुडोपनिषत्समाप्ता षट्चत्वारिंश
त ४६ अथ कालाग्निरुद्रं भगवंतं सनत्कुमारः पप्रच्छाधीहि भगवं त्रिपु
ण्ड्रविधिं सतत्त्वं किं द्रव्यं कति प्रमाणं का रेखा किं दैवतं के मंत्राः काः शक्त
यः किं फलमिति तं होवाच भगवान्यद्द्रव्यं तदाग्नेयं भस्म सद्याादिपंचब्रह्मम

त्रेः परिगृह्याग्निरिति भस्मेत्यभिमंत्र्यमानस्तोकेतिसमुद्धृत्यत्र्यंबकं यजामह इति
शिरो ललाटवक्षः स्कंधेष्विति त्रिभिस्त्र्यायुषैस्त्र्यंबकैस्तिस्रो रेखाः प्रकुर्वीत व्रत
मेतच्छांभवं तं सर्ववेदेषु वेदवादिभिरुक्तं तत्समाचरेन्मुमुक्षुर्न पुनर्भवायाथ
सनत्कुमारः प्रणवस्य त्रिधा वा ललाटादा चक्षुषश्च भ्रुवोर्मध्यतो या प्रथमा रे
खा सा गार्हपत्यश्चाकारो रजो भूर्लोकश्चात्मा क्रियाशक्तिर्ऋग्वेदः प्रातः सवने
महेश्वरोपास्य द्वितीया रेखा सा च दक्षिणाग्निरुकारः सत्वमंतरिक्षमंतरात्मा
चेच्छाशक्तिर्यजुर्वेदो माध्यंदिनं सवने सदाशिवो यास्य तृतीया रेखा सा आहव
नीयो मकारस्तमो द्यौः परमात्मा ज्ञानशक्तिः सामवेदस्तृतीयसवनं शिवो
देवतेति यो विद्वान्ब्रह्मचारी गृहस्थो यतिर्वा समस्तपातकोपपातकेभ्यः प्र

१३५

तोभवतिनेनसर्वेदेवताध्याताभवंतिससर्वैर्देवैर्ज्ञातोभवतिससर्वेषुतीर्थेषुस्नातोभ
वतिदेहंत्यक्त्वाशिवसायुज्यतामेतिनचपुनरावर्त्ततेनचपुनरावर्त्ततेइत्याहभ
गवान्कालाग्निरुद्रः १ इत्यथर्ववेदेकालाग्निरुद्रोपनिषत्समाप्तासप्तचत्वारिं
शत्॥४७॥श्रीगणेशायनमः॥ॐनमोथर्ववेदायश्रीरामभद्रस्वरूपिणे ॐ
चिन्मयेस्मिन्महाविष्णोजातेदशरथेहरौ रघोःकुलेखिलंराजतिराजतेयोमहीं
स्थितः सरामइतिलोकेषुविद्वद्भिःप्रकटीकृतः राक्षसायेनमरणंयांतिस्वो
द्रेकतोथवा रामनामभुविख्यातमभिरामेणवापुनः राक्षसान्मर्त्यरूपेण
राहुर्मनसिजंयथा प्रभाहीनांस्तथाकृत्वाराज्यार्हाणांमहीभृतां धर्ममार्गंच
रित्रेणज्ञानमार्गंचनामतः यथाध्यानेनवैराग्यमैश्वर्यंयस्यपूजनात्

तथा राम्यस्य रामाख्या भुविस्यादथ तत्वतः रमंते योगिनोनंते नित्यानंदे चिदात्मनि
इति रामपदेनासौ परं ब्रह्माभिधीयते चिन्मयस्याद्वितीयस्य निष्कलस्याशरीरिणः॥
उपासकानां कार्य्यार्थं ब्रह्मणो रूपकल्पना रूपस्थानां देवतानां पुंस्त्र्यंगास्त्रादिकल्प
ना द्विचत्वारिंशद्दृष्टा सां दश द्वादश षोडश अष्टादशामी कथिता हस्ताः शंखादि
भिर्युताः सहस्रांतास्तथाता सां वर्णवाहनकल्पना शक्तिसेवाकल्पना च ब्रह्म
ण्येवं हि पंचधा कल्पितस्य शरीरस्य तस्य सेनादिकल्पना ब्रह्मादीनां वाचको
यं मंत्रोन्वर्थादिसंज्ञकः जप्तव्यो मंत्रिणा नैनं विना देवः प्रसीदति क्रियाकारण
कर्तृणामर्थं मंत्रो वदत्ययं मननात्त्राणनान्मंत्रः सर्ववाच्यस्य वाचकः सोभ
यस्यास्य देवस्य विग्रहो यंत्रकल्पना विना मंत्रेण चेत्पूजा देवता न प्रसीदति १

स्वभूर्ज्योतिर्मयोनंतरूपी स्वेनैव भासते जीवत्वेन दमो यस्य सृष्टिस्थितिलयस्य च
कारणत्वेन चिद्धृत्या रजस्सत्वतमोगुणैः यथैव बटबीजस्य प्राकृतस्य महाद्रुमः त
थैव रामबीजस्थं जगदेतच्चराचरं रेफारूढा मूर्त्तयः स्युः शक्तयस्तिस्र एव
चेति सीतारामौ तन्मयावत्र पूज्यौ जातान्याभ्यां भुवनानि द्विसप्त स्थितानि च
प्रहृतान्येव तेषु ततो रामो मानवो मायया धातर जगत्प्राणायात्मने तस्मै नमः स्या
न्नमस्त्वैक्यं प्रवदेत्प्राग्गुणेनेति २ जीववाचीनमोनाम चात्मा राम इति गीयते
तादात्मिका या चतुर्थी तथा चार्य्येति कथ्यते मंत्रोयं वाचको रामो वाच्यः स्या
द्योग एतयोः फलदश्चैव सर्वेषां साधकानां न संशयः यथा नाम्नी वाचकेन
नाम्ना यो भिमुखो भवेत् तथा बीजात्मको मंत्रो मंत्रिणो भिमुखो भवेत्।

बीजशक्ती न्यसेद्दक्षवामयोः स्तनयोरपि कीलंमध्ये विनाभाव्यं स्ववांछा विनियो
गवान् सर्वेषामेवमंत्राणामेषसाधारणक्रमः अत्ररामोनंतरूपस्तेजसावह्निना
समः सत्वेनुक्ष्मगुविश्वश्चेदग्नीषोमात्मकं जगत् उत्पन्नं सीतयाभातिचंद्रश्चं
द्रिकयायथा प्रकृत्यासहितःश्यामःपीतवासाजटाधरः द्विभुजःकुंडलीरत्नमा
लीधीरोधनुर्द्धरः प्रसन्नवदनोजेताधृष्ठ्यष्टकविभूषितः प्रकृत्यापरमैश्वर्याजगद्यो
न्यांकितांकभृत हेमाभयाद्विभुजयासर्वालंकृतयाचितः श्लिष्टःकमलधारिण्या
पुष्टःकोशलजात्मजः दक्षिणेलक्ष्मणेनाथसधनुष्पाणिनापुनः हेमाभेना
नुजेनैवतदाकोणत्रयंभवेत् २ तथैवतस्यमंत्रस्ययस्याणुश्चस्वडेंःतया एवं
त्रिकोणरूपंस्यात्तंदेवायेसमाययुः स्तुतिंचकुश्चजगतःपतिंकल्पतरौस्थितं

१३७

137

कामरूपायरामायनमोमायामयायच नमोदेहादिरूपायॐकारायनमोनमः रमाधरा
यरामायश्रीरामायात्ममूर्त्तये जानकीदेहभूषाय रक्षोघ्नायभ्रुभांगिने रुद्रा
यरघुवीरायदशास्यांतकरूपिणे राममद्रमहेष्वासरघुवीरनृपोत्तम भोदशा
स्यांतकास्माकंरक्षांदेहिश्रियंचते त्वमैश्वर्य्यंदापयाथ संप्रहस्याश्वरिमारणं कुर्व
तिस्तुत्यदेवाद्यास्तेनसार्द्धंसुखंस्थिताः स्तुवंत्येवंहिऋषयस्तदारावणआसुरः
रामपत्नीवनस्थायःस्वनिर्वृत्त्यर्थमाददे सरावणइतिख्यातोयद्वारावाच्चरा
वणः तद्याजेनेक्षितुंसीतांरामोलक्ष्मणएवच विचेरतुस्तदाभूमौदेवीस
दृश्यदासुरं हत्वाकबंधंशवरींगत्वातस्याज्ञयातथा पूजितावीरपुत्रेणभक्ते
नचकपीश्वरं आहूयशंसतांसर्वमाद्यंतंरामलक्ष्मणौ ४ सतुरामेशंकि

१३७

तः सनप्रत्ययार्थं च दुंदुभेः विग्रहं दर्शयामास रामस्तमधिचिक्षिपत् सप्तता
लान् विभिद्याशु मोदते राघवस्तदा तेन हृष्टः कपीन्द्रो सौ स रामस्तस्य पत्तनं
जगाम आगर्जेद्दनुजो बालिनो वेगतो ग्रहात् बाली तदा निर्जगाम तं बालिनमथाह
वे निहत्य राघवो राज्ये सुग्रीवं स्थापयत्ततः हरीनाहूय सुग्रीवस्त्वाह चाशाविदो
धुना आदाय मैथिलीमद्य दक्षताश्चाशु गच्छतां ततस्तेतार हनुमानब्धिं लंकां समा
ययो सीतां दृष्ट्वासुरान्हत्वा पुरं दग्ध्वा तथा स्वयं आगत्य रामेण सहन्यवेदय
तत त्वतः तदा रामः क्रोधरूपी तानाहूयाथ वानरान् तैः सार्द्धमादायोस्त्राश्च पु
रीं लंकां समाययौ तां दृष्ट्वा तद्धीशेन सार्द्धं युद्धमकारयत् घटश्रोत्रसहस्रा
हाजिह्वाद्यायुक्तं तमाहवे हत्वा बिभीषणं तत्रस्थाप्याथ जनकात्मजां आदायाद्

स्थितां कृत्वा स्वपुरं तैर्जगाम सः ततः सिंहासनस्थः सन् द्विभुजो रघुनंदनः धनु
र्द्धरः प्रसन्नात्मा सर्वाभरणभूषितः ५ मुद्रां ज्ञानमयीं याम्ये वामे तेजः प्रकाश
ने धृत्वो व्याख्याननिरतश्चिन्मयः परमेश्वरः उदग्दक्षिणयोः स्वस्य शत्रुघ्नभ
रतौ धृतः ॥ हनुमंतं च श्रोतारमग्रतः स्यात्रिकोणगं भरताधस्तु सुग्रीवं शत्रुघ्नाधो वि
भीषणं पश्चिमे लक्ष्मणं धृत्वा धृतछत्रं सचामरं तदधस्तात्तालवृंतकरौ वस्त्रं पुन
र्भवेत् एवं षट्कोणमादौ स्वदीर्घांगैरेषसंयुतः द्वितीयं वासुदेवाद्यैराग्नेयादिषु सं
युतः तृतीयं वायुसूनुं च सुग्रीवं भरतं तथा विभीषणं लक्ष्मणं चैव चांगदं चारिमर्दनं ॥
जांबवंतं च तैर्युक्तं ततो धृष्टिर्जयंतकः विजयश्च सुराष्ट्रश्च राष्ट्रवर्धन एव च अ
कोपो धर्मपालश्च सुमंत्रस्त्वभिरावृतः ततः सहस्रदृग्वाह्निधर्मरक्षोवरुणानिलाः ॥

इंद्रीशधात्रनंताश्च दशाभिस्त्वेभिरावृतः बहिस्तदायुधैः वज्रानलादिभिरलंकृतः
वसिष्ठवामदेवादिमुनिभिः समुपासितः एवमुद्देशतः प्रोक्तो निर्देशस्तस्य चाधुना त्रिर
खापुटमालिख्य मध्ये तारद्वयं लिखेत् ६ तन्मध्ये बीजमालिख्य तदधः साध्यमालिखे
त् द्वितीयांतं च तस्योर्ध्वबक्ष्यं तं साधकं तथा कुरुद्वयं च तत्पार्श्वे लिखेद्बीजांतरे रमां
तास्तं वंप्रणवाभ्यां च वेष्टयेच्छुद्धबुद्धिमान् दीर्घमाजिवडस्वेषु लिखेद्बीजं हृदादिभिः
कोणपार्श्वे रमामायेतदग्रेनंगमालिखेत् क्रोधकोणग्रांतरेषु लिखेन्मंत्र्यभितागिरं
वृत्तत्रयं साष्टपत्रं सरोजं विलिखेत्स्वरान् केसरे चाष्टपत्रे च वर्गाष्टकं यथा लिखेत्
तेषु मालामनोर्वर्णान् विलिखेद्भूमिसंख्यया अंते पंचाक्षराण्येवं पुनरष्टदलं लि
खेत् तेषु नारायणाष्टाक्षरं लिख्येत् केसरे रमां तद्बहिर्द्वादशदलं विलिखेत्

१३९

139

ख्वी

द्वादशाक्षरं तथोंनमोभगवतेवासुदेवायइत्ययं आदिक्षांताः केसरेषुवृत्ताकारेण
संलिखेत् तद्बहिः षोडशदलं विलिख्यकेसरेह्रियं वर्मास्त्रनतिसंयुक्तं दलेषुद्वा
दशाक्षरं तत्संधिषुरजादीनांमंत्रान्मंत्रीसमालिखेत् हंसंभंक्षंलंसंमंज्यं
लिखेत्सम्यक् ततोबहिः द्वात्रिंशारंमहापद्मंनादबिंदुसमायुतं ० विलिखे
न्मंत्रराजांस्तितेषुपत्रेष्वयत्नतः ध्यायेदष्टवसूनेकादशरुद्रांस्ततत्रैवे द्वादशे
नांश्चधातारंवषट्कारंततोबहिः भूगृहंवज्रशूलोग्रंरेखात्रयसमन्वितं
द्वारोपेतंचराश्यादिभूषितंस्फटिकसंयुतं एवंमंडलमालिख्यतस्यदिक्षुविदिक्षु
च नारसिंहंचवाराहंलिखेन्मंत्रद्वयंतथा कूटरेफानुग्रहेंद्रनादशक्त्यादिभि
र्युतः योनृसिंहः समाख्यातोग्रहमारणकर्मणि अंत्यार्धीशायुतोबिंदुनादै · १३९

बीजं च केसरं हुंकारं चात्र रामस्य मालामंत्रो ध्वनेरितः तारो नतिश्च निद्राया स्मृति र्मे
धश्च कामिका रुद्रेण संयुतो वह्नि र्मे धा मरश्च विभूषिता दीर्घक्रूरयुता ह्लादिन्यथो दीर्घसमा
नदा क्षुधा क्रोधिन्यमोघा च विश्वामप्यथ मेधया युक्ता दीर्घा ज्वालिनी च सूक्ष्मा मृत्यु
स्वरूपिणी सप्रतिष्ठा ह्लादिनी त्वक् क्ष्वेला प्रीतिश्च साम रं ज्योतिस्तीक्ष्णाग्नि संयुक्ता
श्वेतोनुस्वार संयुताः कामिका पंचमो लांतः स्नातातो धांत इत्यथ समानं तो दीर्घयुतो वा
युः सूक्ष्मयुतो विषः कामिका कामिकारुद्र युक्ताथोप्य स्थिरेच्छया तापनी दीर्घ
युक्ता भूर निलो नंतगो नलः नारायणात्मकः कालः प्राणो भूविद्यया युतं पीता रतिस्त
था लांतो न्याययुक्तोंत तो नतिः सप्तचत्वारिंशद्वर्णो गुणान्तः स गुणस्त्वयं राज्याभिषि
क्तस्य रामस्यो क्तक्रमाल्लिखेत् इदं सर्वात्मकं यंत्रं प्रागुक्तमृषिसेवितं सेवकानां मोद

१४०

करमायुरारोग्यवर्द्धनं अपुत्रिणांपुत्रदंचबहुनाकिमनेनवै प्राप्नुवंतिक्षणात्सम्यगत्रधर्मा
दिकानपि इदंरहस्यंपरममीश्वरेणाविदुर्गमं एवंयंत्रंसमाख्यातंनदेयंप्राकृतेजने
९ भूतादिकंशोधयेद्द्वारपूजांकृत्वापद्मासनस्थःप्रसन्नः अर्च्याविधावस्य
पीठाधरेऽर्ध्वपार्श्वचिंतनमध्यपद्मार्चनंच कृत्वामृदुश्लक्ष्णसतूलिकायांरत्नासने
देशिकेचार्च्चयित्वा शक्तिंचाधाररूपकांकूर्मनागोपृथिव्यब्जेस्वासनाधःप्रकल्प्य
विघ्नंदुर्गांक्षेत्रपालंचवाणींबीजादिकांश्चाग्निदेशादिकांश्च पीठस्यांघ्रिष्वेषुधर्मा
दिकांश्चानंतरपूर्वास्तांस्तस्यदिक्ष्वर्चयेच्च मध्येकमादकोग्नि विधर्कतेजांस्युपर्य
उमेरर्चितानि रजःसत्वंतमएतानिवृत्तत्रयंबीजाद्यंकेमाद्भावयेच्च आशाव्याशा
स्वपश्यात्मानमंतरात्मानंचपरमात्मानमंतः ज्ञानात्मानंचार्चयेत्तस्यदिक्षुमायाविद्ये १४०

येकलापारतत्वे संपूजयेद्विमलादीश्च शक्तीरभ्यर्चयेद्देवमावाहयेच्च अंगव्यूहानीलज्ञा
धेश्च पूज्य ध्वजाद्यादिकैर्लोकपालैस्तदस्त्रैः वसिष्ठाद्यैर्मुनिभिर्नीलमुख्यैराराधयेद्राघ
वं चंदनाद्यैः मुख्योपहारैर्विविधैश्च पूज्य स्तस्मै जपादीन्सम्यक् समर्प्य एवंभूतं जग
दाधारभूतं राममवंदे सच्चिदानंदरूपं गदारिशंखाब्जधरं भवारिं यः संध्यायेन्मोक्षमा
प्नोति सर्वे विश्वव्यापी राघवो यस्तदानीमंतर्दधे शंखचक्रे गदाब्जे धृत्वा रामः सहि
तः संवृतश्च सपत्तनः सानुजः सर्वलोकी तद्भक्तायेलब्धकामांश्च भुक्त्वा तथा पदं पर
मं यांति ते च इमा ऋचः सर्वकामार्थदाश्च ते ये पठंत्यमला यांति मोक्षं तेये पठंत्यम
ला यांति मोक्षमिति १ इत्यथर्ववेदे रामपूर्वतापनीयमुपनिषत्समाप्ता श्चत्वारिं
रात ॥४८॥ बृहस्पतिरुवाच ॥ याज्ञवल्क्यं यदनु कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूता

१४१



नांब्रह्मसदनमविमुक्तंवैकुरुक्षेत्रं देवानांदेवयजनंसर्वेषांभूतानांब्रह्मसदनंतस्मा
द्यत्रक्वचनगच्छतितदेवमन्येततदविमुक्तमेवेदंवैकुरुक्षेत्रंदेवानांदेवयजनंसर्वेषांभूता
नांब्रह्मसदनमत्रहिजंतोःप्राणेषूत्क्रममाणेषुरुद्रस्तारकंब्रह्मव्याचष्टेयेनासावमृ
तीभूत्वामोक्षीभवतितस्मादविमुक्तमेवनिषेवेताविमुक्तंनविमुंचेदित्येवमेवैतद्भ
गवन्नितियाज्ञवल्क्यः॥ प्रथमःखंडः॥१॥ अथहैनंभारद्वाजःपप्रच्छयाज्ञवल्क्यंकिं
तारकंकिंतरतीतिसहोवाचयाज्ञवल्क्यस्तारकंदीर्घानलंबिंदुपूर्वकंदीर्घानलंपुन
र्मीयनमश्चंद्रायनमोभद्रायनमइत्योंतद्ब्रह्मात्मकाःसच्चिदानंदाख्याइत्युपासित
व्यमकारःप्रथमाक्षरोभवत्युकारोद्वितीयाक्षरोभवतिमकारस्तृतीयाक्षरोभवत्य
र्द्धमात्राश्चतुर्थाक्षरोभवतिबिंदुःपंचमाक्षरोभवतिनादःषष्ठाक्षरोभवतितारकत्वा

१४१

तारकोभवतीति देवतारकं ब्रह्मत्वं विद्धि तद्देवोपास्यमितिज्ञेयं गर्भजन्मजरामरणसं
सारमहद्भयात्संतारयतीति तस्मादुच्यते तारकमिति य एतत्तारकं ब्राह्मणो नित्यमधी
ते स पाप्मानं तरति स मृत्युं तरति स भ्रूणहत्यां तरति स ब्रह्महत्यां तरति स वीरहत्यात
रति स सर्वहत्यां तरति स संसारं तरति स सर्वं तरति सोविमुक्तो माश्रितो भवति स
महान्भवति सोमृतत्वं च गच्छतीति द्वितीयः खंडः ॥२॥ अथैते श्लोका भवंति ॥ अका
राक्षरसंभूतः सौमित्रिर्विश्वभावनः उकाराक्षरसंभूतः शत्रुघ्नस्तैजसात्म
कः ॥ प्राज्ञात्मकस्तु भरतो मकाराक्षरसंभवः ॥ अर्द्धमात्रात्मको रामो ब्रह्मानंदैकवि
ग्रहः श्रीरामसान्निध्यवशाज्जगदाकारकारिणी उत्पत्तिस्थितिसंहारकारिणी
सर्वदेहिनां सा सीता भवति ज्ञेया मूलप्रकृतिसंज्ञिता प्रणवत्वात्प्रकृतिरिति वदंति
ब्रह्मवादिन इत्योमित्येतदक्षरमिदं सर्वं तस्योपव्याख्यानं भूतं भव्यं भविष्य

दितिसर्वमोंकार एवयच्चान्यत्त्रिकालातीतंतदप्योंकार एव सर्वं ह्येतद्ब्रह्मायमात्मा
ब्रह्मसोयमात्माचतुष्पाज्जागरितस्थानोबहिःप्राज्ञःसप्तांगएकोनविंशति
मुखःस्थूलभुग्वैश्वानरःप्रथमःपादःस्वप्नस्थानोंतःप्रज्ञःप्रविविक्तभुक्
तैजसोद्वितीयःपादोयत्रसुप्तोनकंचनकामंयतेनकंचनस्वप्नंपश्यतितत्
सुषुप्तंसुषुप्तस्थानेएकीभूतःप्रज्ञानघनएवानंदमयोह्यानंदभुक्चेतोमु
खःप्राज्ञस्तृतीयःपादएषसर्वेश्वरएषसर्वज्ञएषोंतर्याम्येषयोनिःसर्वस्य
प्रभवाप्ययौहिभूतानांनबहिःप्रज्ञंनांतःप्रज्ञंनोभयतःप्रज्ञंनप्रज्ञंना
प्रज्ञंनप्रज्ञानघनमदृष्टमव्यवहार्यमग्राह्यमलक्षणमचिंत्यम
व्यपदेश्यमेकात्मप्रत्ययसारंप्रपंचोपशमंशिवमद्वैतंचतुर्थंमन्यंते

स आत्मा विज्ञेयः सदोज्वलो विद्यातत्कार्यहीनः स्वात्मबंधहरः सर्वदा द्वैतरहित आनंद
रूपः सर्वाधिष्ठानसन्मात्रो निरस्ताविद्यातमोमोहोहमेवेति संभाव्योहमित्योंतत्सत्यं
तत्परं ब्रह्मरामचंद्रश्चिदात्मकः सोहमोंतद्रामभद्रः परंज्योतिः रामोहमित्यात्मा
नमादायमनसा ब्रह्मणैकीकुर्यात्सदा रामोहमित्येतत्तत्वतः प्रवदंतिये नतेसं
सारिणो नूनं राम एव न संशयः इत्युपनिषद्य एवं वेद स मुक्तो भवति स मुक्तो भव
तीति याज्ञवल्क्यः ॥ तृतीयः खंडः ३ अथ हैनमत्रिः पप्रच्छ याज्ञवल्क्यं य एषोनंतो
व्यक्त आत्मा तं कथमहं विजानीयामिति स होवाच याज्ञवल्क्यः सोविमुक्त उपास्यो
य एष परिपूर्णानंदैकरसः चिदात्मा योयमनंतोव्यक्त आत्मा सोविमुक्ते प्रतिष्ठि
त इति सोविमुक्तः कस्मिन्प्रतिष्ठितो भवतीति वरणायां नास्यां मध्ये प्रति

ष्ठित इति को वै वरणा का च नासीति सर्वानिंद्रियकृतान्दोषान्वारयतीति तेन वरणा
भवतीति सर्वानिंद्रियकृतान्पापान्नाशयतीति तेन नासी भवतीति कतमं चास्य
स्थानं भवतीति भ्रुवोर्घ्राणस्य यः संधिः स एष द्यौर्लोकस्य परस्य च संधिर्भवती
त्येतद्वै संधिं संध्यां ब्रह्मविद उपासत इति सोऽविमुक्त उपास्य इति सोऽविमुक्तं ज्ञा
नमाचष्टे यो वैतदेवं वेदार्थ स एषो ह्यरोनंतो व्यक्तः परिपूर्णानंदैकरसश्चिदा
त्मा यो यमविमुक्ते प्रतिष्ठित इत्यथ प्रश्नमुवाच स्वयमेव याज्ञवल्क्यः॥ श्री
रामचंद्रस्य मनुं जजाप वृषभध्वजः मन्वंतरसहस्रैस्तु जपहोमार्चना
दिभिः ततः प्रसन्नो भगवान्श्रीरामः प्राह शंकरं वृणीष्व यदभीष्टं तद्दा
स्यामि परमेश्वरेति सहोवाच॥ मणिकर्ण्यां वा मम क्षेत्रे गंगायां वा तटे पुनः।

म्रियते देहितज्जंतोर्मुक्तिं नातोवरां तारमित्यथ सहोवाच श्रीरामः क्षेत्रेत्र तव देवे
शयत्र कुत्रापि वा मृताः कृमिकीटादयोप्याशु मुक्ताः संतो न चान्यथा अवि
मुक्ते तव क्षेत्रे सर्वेषां मुक्तिसिद्धये अहं सन्निहितस्तत्र पाषाणप्रतिमादिषु क्षे
त्रेस्मिन्योर्चयेद्भक्त्या मंत्रेणानेन मां शिव ब्रह्महत्यादिपापेभ्यो मोक्षयिष्यामि
मा शुचः त्वत्तो वा ब्रह्मणो वापि ये लभंते षडक्षरं जीवंतो मंत्रसिद्धाः स्युर्मु
क्ता मां प्राप्नुवंति ते मुमूर्षोर्दक्षिणे कर्णे यस्य कस्यापि वा स्वयं॥ उपदेक्ष्यसि
मन्मंत्रं स मुक्तो भविता शिव इति श्रीरामचंद्रेणोक्तं यो विमुक्तं पश्यति स
जन्मांतरितान्दोषान्नाशयति॥ चतुर्थः खंडः॥४॥ अथ हैनं भारद्वाजो या
ज्ञवल्क्यमुवाचाथ कैर्मंत्रैः स्तुतः श्रीरामचंद्रः प्रीतो भवति स्वात्मानं दर्श

यतितन्नोब्रूहि भगवन्निति सहोवाचयाज्ञवल्क्यः श्रीरामेयोवंशिहि
तोब्रह्मापुनरेतयागाथयानमस्करोति ॥ विश्वंभरंमहाविष्णुंनारायणराम
नामयं पूर्णानंदैकविज्ञानंपरंज्योतिःस्वरूपिणं मनसासंस्मरन्ब्रह्मातु
ष्टावपरमेश्वरं योवैश्रीरामःसभगवान्यद्वैपरमानंदात्मायःपरंब्रह्मभू
र्भुवःस्वस्तस्मैवैनमोनमः १ योवैश्रीरामःसभगवान्यश्चाखंडैकरसोभूर्भु
वःस्वस्तस्मैवैनमोनमः २ योवैश्रीरामःसभगवान्यच्चब्रह्मानंदा
मृतंभूर्भुवःस्वस्तस्मैवैनमोनमः ३ योवैश्रीरामःसभगवान्यत्तारकं
ब्रह्मभू० ४ योवैश्रीरामःसभगवान्योब्रह्मायोविष्णुरीश्वरोयःस
र्वदेवात्माभू० ५ योवैश्रीरामःसभगवान्येसर्ववेदाःसांगाःसशाखाः

सपुरात्माभूः० ६ योवैश्रीरामः सभगवान्योजीवात्माभूः० ७ योवैश्रीरामः सभ
गवान्यः सर्वभूतांतरात्माभूः० ८ योवैश्रीरामः सभगवान्येदेवासुरमनुष्यादिभा
वात्माभूः० ९ योवैश्रीरामः सभगवान्येमत्स्यकूर्माद्यवताराभूः० १० योवैश्रीरामः
सभगवान्यश्चप्राणोभूः० ११ योवैश्रीरामः सभगवान्योंतःकरणचतुष्टयात्माभूः०
१२ योवैश्रीरामः सभगवान्यश्चयमोभूः० १३ योवैश्रीरामः सभगवान्यश्चांत
कोभूः० १४ योवैश्रीरामः सभगवान्यश्चमृत्युर्भूः० १५ योवैश्रीरामः सभगवान्य
च्चामृतंभूः० १६ योवैश्रीरामः सभगवान्यानिपंचमहाभूतानिभूः० १७ योवै
श्रीरामः सभगवान्यत्स्थावरजंगमात्मकंभूः० १८ योवैश्रीरामः सभगवान्
येपंचाग्नयोभूः० १९ योवैश्रीरामः सभगवान्याः सप्तमहाव्याहृतयोभूः० २०

यो वै श्रीरामः स भगवान्या विद्या भूः० २१ यो वै श्रीरामः स भगवान्या सरस्वती भूः० २२ यो वै श्रीरामः स भगवान्या लक्ष्मीर्भूः० २३ यो वै श्रीरामः स भगवान् या गौरी भूः० २४ यो वै श्रीरामः स भगवान्या जानकी भूः० २५ यो वै श्रीरामः स भगवान्यच्च त्रैलोक्यं भूः० २६ यो वै श्रीरामः स भगवान्यश्च सूर्यो भूः० २७ यो वै श्रीरामः स भगवान्यश्च सोमो भूः० २८ यो वै श्रीरामः स भगवान्यानि नक्षत्राणि भूः० २९ यो वै श्रीरामः स भगवान्ये च नवग्रहा भूः० ३० यो वै श्रीरामः स भगवान्ये चाष्टौ लोकपाला भूः० ३१ यो वै श्रीरामः स भगवान्ये चाष्टौ वसवो भूः० ३२ यो वै श्रीरामः स भगवान्ये चैकादश रुद्रा भूः० ३३ यो वै श्रीरामः स भगवान्ये च द्वादशादित्या भूः० ३४ यो वै श्रीरामः स भगवान्य१ यच्च भूतं भव्यं भविष्यद्भूः० ३५ यो वै श्रीरामः स भगवान्यो

ब्रह्मांडस्यांतर्बहिर्व्याप्नोति विराट्भूः० ३६ योवैश्रीरामःस भगवान्योहिरण्य
गर्भोभूः० ३७ योवैश्रीरामःसभगवान्याप्रकृतिर्भूः० ३८ योवैश्रीरामःसभग
वान्यश्चौंकारोभूः० ३९ योवैश्रीरामःसभगवान्याश्चतस्रोर्द्धमात्राभूः० ४० यो
वैश्रीरामःसभगवान्यःपरमपुरुषोभूः० ४१ योवैश्रीरामःसभगवान्यश्चप
रमेश्वरोभूः० ४२ योवैश्रीरामःसभगवान्यःपरमपुरुषोभूः० ४३ योवैश्रीरामः
सभगवान्यॐनमोभगवतेवासुदेवायमहाविष्णुर्भूः० ४४ योवैश्रीरामःस
भगवान्यःपरमात्माभूर्भुवःस्वस्तस्मैवैनमोनमः ४५ योवैश्रीरामःसभ
गवान्योज्ञानात्माभूः० ४६ योवैश्रीरामःसभगवान्यःसच्चिदानंदाद्वै
तैकरसात्माभूर्भुवःस्वस्तस्मैवैनमोनमः ४७ यःसर्वइत्येतैःसप्तच

१४६

146

त्वादिंशन्मंत्रैर्नित्यं देवं स्तौति तस्य देवः प्रीतो भवति स्वात्मानं च दर्शयति तस्माद्य
एतैर्मंत्रैर्नित्यं देवं स्तौति स देवं पश्यति सोमृतत्वं च गच्छति सोमृतत्वं च गच्छति॥
पंचमः खंडः॥५॥ इत्यथर्ववेदे रामोत्तरतापिनीयमुपनिषत्समाप्ता एकोन
पंचाशत॥४९ ॐ अथाश्वलो भगवंतं परमेष्ठिनमुपसमेत्योवाचाधीहि भग
वन्ब्रह्मविद्यां वरिष्ठां सदा सद्भिः संसेव्यमानां निगूढां ययाचिरात्सर्व
पापं व्यपोह्य परात्परं पुरुषं प्रयाति विद्वान् तस्मै स होवाच पितामहश्च श्रद्धाभ
क्तिध्यानयोगादवेहि न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः
॥परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशंति वेदांतविज्ञानसु
निश्चितार्थाः सन्यासयोगाद्यतयः शुद्धसत्वाः ते ब्रह्मलोकेषु परांतकाले

परामृताः परिमुच्यंति सर्वे विविक्तदेशे च सुखासनस्थः शुचिः समग्रीवशिरः
शरीरः अंत्याश्रमस्थः सकलेंद्रियाणि निरुध्य भक्त्या स्वगुरुं प्रणम्य हृत्पुंडरीकं
विरजं विशुद्धं विचिंत्य मध्ये विशदं विशोकं अनंतमव्यक्तमचिंत्यरूपं शिवं प्रशांत
ममृतं ब्रह्मयोनिं तमादिमध्यांतविहीनमेकं विभुं चिदानंदस्वरूपमद्भुतं ॥ उ
मासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकंठं प्रशांतं ध्यात्वा मुनिर्गच्छति भू
तयोनिं समस्तसाक्षिं तमसः परस्तात् स ब्रह्मा स शिवः सेंद्रः सोक्षरः पर
मः स्वराट् स एव विष्णुः स प्राणः स आत्मा परमेश्वरः स एव सर्वं यद्भूतं यच्च भ
व्यं सनातनं ज्ञात्वा तं मृत्युमत्येति नान्यः पंथा विमुक्तये सर्वभूतस्थमा
त्मानं सर्वभूतानि चात्मनि संपश्यन् ब्रह्म परमं याति नान्येन हेतुना ॥ ॥

आत्मानमरणिं कृत्वा प्रणवं चोत्तरारणिं ज्ञाननिर्मथनाभ्यासात्पाशं दहति पंडितः।
स एव मायापरिमोहितात्मा शरीरमास्थाय करोति सर्वं स्त्रियोन्नपानादिविचित्रभोगैः स एव
जाग्रत्परितृप्तिमेति स्वप्ने च जीवः सुखदुःखभोक्ता स्वमायया कल्पितजीवलो
के सुषुप्तिकाले सकले विलीने तमोभिभूतः सुखरूपमेति पुनश्च जन्मांतरकर्मयोगात्स एव जीवः स्वपिति प्रबुद्धः पुरत्रये क्रीडति
यश्च जीवस्ततस्तु जातं सकलं विचित्रं आधारमानंदमखंडबोधं यस्मिंल्लयं
याति पुरत्रयं च यन्मेव तेजसि मनोसि विश्वं मत्तोत्यभावं विरहेणाजोगिनो॥
एतस्माज्जायते प्राणो मनः सर्वेंद्रियाणि च खं वायुर्ज्योतिरापः पृथिवी विश्व
स्य धारिणी यत्परं ब्रह्म सर्वात्मा विश्वस्यायतनं महत् सूक्ष्मात्सूक्ष्मत
रं नित्यं तत्त्वात्तत्त्वादि केंचतत्तर जाग्रत्स्वप्नसुषुप्त्यादि प्रपंचं यत्प्रकाश्यते

तद्ब्रह्माहमितिज्ञात्वा सर्वबंधैः प्रमुच्यते त्रिषुधामसुयद्भोज्यंभोक्ताभोगश्चयद्
भवेत् तेभ्योविलक्षणःसाक्षीचिन्मात्रोहंसदाशिवः मय्येवसकलंजातंमयिसर्वं
प्रतिष्ठितं मयिसर्वंलयंयातितद्ब्रह्मास्म्यहमद्वयं प्रथमःखंडः॥१॥अणोरणीया
नहमेवतद्वन्महानहंविश्वमहंविशुद्धः पुरातनोहंपुरुषोहमीशोहिरण्मयोहंशिव
रूपमस्मि नारायणोहंपुरुषःशिवोहंब्रह्माहमस्मिसकलोहमस्मि पूर्णोहम
स्मिपुरुषोहमस्मिज्ञानोहमस्मिसत्योहमस्मि अपाणिपादोहमचिंत्यशक्तिःप
श्याम्यचक्षुःसश्रृणोम्यकर्णः अहंविजानामिविविक्तरूपोनचास्तिवेत्तासम
चित्सदाहं वेदैरनेकैरहमेववेद्योवेदांतकृद्वेदविदेवचाहं नपुण्यपापेममनास्ति
नाशोनजन्मदेहेंद्रियबुद्धिरस्ति नभूमिरापोनचवह्निरस्तिनचानिलो

१४८

148

नास्ति न चास्ति च अंबरं च एवं विदित्वा परमात्मरूपं गुहाशयं निष्कलमद्वितीयं सम
स्तसाक्षिं सदसद्विहीनं प्रयाति शुद्धं परमात्मरूपं ध्यायेज्जगद्बीजजगन्निवासं विश्वं
जुहोति वसुधादिशिवावसाने यः शतरुद्रियमधीते सोग्निपूतो भवति स वायुपूतो भ
वति स आत्मपूतो भवति स कृत्याकृत्यात्पूतो भवति स ब्रह्महत्यापूतो भवति तस्मा
दविमुक्तमाश्रितो त्याश्रमी सर्वदा सकृद्वा जपेत् अनेन ज्ञानमाप्नोति संसा
रार्णवनाशनं तस्मादेवं विदित्वैनं कैवल्यं फलमश्नुते कैवल्यं फलमश्नुते
द्वितीयः खंडः ॥२॥ इत्यथर्ववेदे कैवल्योपनिषत् समाप्ता पंचाशत् ५० ॐ याज्ञव
ल्क्यं यदनुकुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमविमुक्तं
वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनं तस्माद्यत्र क्वचन गच्छति

तदेवमन्यते तदविमुक्तमेवेदं वै कुरुक्षेत्रं देवानां देवयजनं सर्वेषां भूतानां ब्रह्मसदनमत्र हि जं
तोः प्राणेषूत्क्रममाणेषु रुद्रस्तारकं ब्रह्म व्याचष्टे येनासावमृती भूत्वा मोक्षी भवति तस्मा
दविमुक्तमेव निषेवेताविमुक्तं न विमुंचेदेवमेवैतद्याज्ञवल्क्य उवाच ॥ अथ हैनमत्रिः
पप्रच्छ याज्ञवल्क्यं य एषोनंतोव्यक्त आत्मा तं कथमहं विजानीयामिति स होवाच याज्ञवल्क्यः
सोविमुक्त उपास्यो य एषोनंतोव्यक्त आत्मा सोविमुक्ते प्रतिष्ठित इति सोविमुक्तः कस्मि
न्प्रतिष्ठित इति वरणायां नास्यां च मध्ये प्रतिष्ठित इति का वै वरणा का च नासीति सर्वा
निन्द्रियकृतान्दोषान्वारयतीति तेन वरणा भवतीति सर्वानिन्द्रियकृतान्पापान्नाशय
तीति तेन नाशी भवतीति कतमं चास्य स्थानं भवतीति भ्रुवोर्घ्राणस्य च यः संधिः
स एष द्यौर्लोकस्य परस्य च संधिर्भवतीत्येतद्वै संधिं संध्यां ब्रह्मविद उपासत इति

१४९

१५५

सोऽविमुक्त उपास्य इति सोऽविमुक्तं ज्ञानमाचष्टे यो वै तदेवं वेद २ अथ हैनं ब्रह्मचारि
णऊचुः॥ किं जाप्येनामृतत्वं ब्रूहीति स होवाच याज्ञवल्क्यः शतरुद्रियेणेत्यान्येवा अमृतानि नामा
न्येतैर्ह वा अमृतो भवतीति कथं जानीयामिति स होवाच याज्ञवल्क्यः स एषोऽनन्तोऽव्यक्त आत्मा
३ अथ ह जनको वैदेहो याज्ञवल्क्यमुपसमेत्योवाच भगवन्संन्यासं ब्रूहीति स होवाच
याज्ञवल्क्यो ब्रह्मचर्यं समाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेद्यदि त
रथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वाथ पुनरव्रती वा व्रती वा स्नातको वास्नातको
वा उत्सन्नाग्निरनग्निको वा यदहरेव विरजेत्तदहरेव प्रव्रजेदेतदेके प्राजापत्यामेवे
ष्टिं कुर्वन्ति तदु तथा न कुर्यादाग्नेयीमेव कुर्यादग्निर्वै प्राणः प्राणमेवैतया करोति
त्रैधातवीमेव कुर्यादित्येवमेवैष भगवन्निति याज्ञवल्क्यः ४ अथ हैनमत्रिः

१४९

पप्रछ यज्ञोपवीती कथं ब्राह्मण इति स होवाच याज्ञवल्क्य इदमेवास्य तद्यज्ञोपवीतं य आ
त्मा प्राश्याचम्यायं विधिः प्रव्राजिनां वीराध्वाने महाप्रस्थाने चाग्निप्रवेशे वा अथ परिव्रा
ड्विवर्णवासा मुंडो परिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवतीति यद्यातुरः स्या
न्मनसा वाचा वा संन्यासदेशं यथा ब्रह्मणा हानुवितस्ते नैवेति संन्यासी ब्रह्मविदेवमेवै
ष भगवन्निति याज्ञवल्क्य तत्र परमहंसो नाम संवर्तकारुणिः श्वेतकेतु दुर्वासा ऋभु
निदाघ जडभरत दत्तात्रेय रैवतक प्रभृतयो व्यक्तलिंगा अव्यक्ताचारा अनुन्मत्ता
उन्मत्तवदाचरंतस्त्रिदंडं कमंडलुं शिक्यं जलपवित्रं पात्रं शिखां यज्ञोपवीतं तत्सर्वं भूः
स्वाहेत्यप्सु परित्यज्यात्मानमन्विछेद्यथा जातरूपधरो निर्ग्रंथो निष्परिग्रहस्तत्त
द्ब्रह्ममार्गे सम्यक् संपन्नः शुद्धमानसः प्राणसंधारणार्थं यथोक्तकाले विमुक्तो भै

क्षमाचरन्नुदरपात्रेण लाभालाभौ समौ भूत्वा शून्यागार देवगृह तृणकूट वल्मीक वृ
क्ष मूल कुलाल शाला अग्निहोत्र नदी पुलिन गिरि कुहर कंदर कोटर निर्झर स्थंडिले निके
तवानस्य प्रयत्नो निर्ममः शुक्लध्यान परायणो ध्यात्मनिष्ठोऽशुभकर्म निर्मूलनपरः
संन्यासेन देहत्यागं करोति स परमहंसो नामेति॥ इत्यथर्ववेदे जाबालोपनिषत्समाप्ते
कपंचाशत ५१ अथातश्चत्वार आश्रमाः षोडशभेदा भवंति तत्र ब्रह्मचारिणश्चतु
र्विधा भवंति गायत्रो ब्राह्मणः प्राजापत्यो बृहन्निति य उपनयनादूर्ध्वं त्रिरात्रमक्षार
लवणाशी गायत्रीमधीते स गायत्रो ष्टाचत्वारिंशद्वर्षाणि वेदं ब्रह्मचर्यं चरेत्प्रतिवेदं द्वादशवा
यावद्ग्रहणांतं वा वेदस्य स ब्राह्मणः स्वदारनिरत ऋतुकालाभिगामी सदा परदार
वर्जी प्राजापत्योथवा चतुर्विंशतिवर्षाणि गुरुकुलवासी ब्राह्मणोष्टाचत्वारिंशतः

वर्षवासीच प्राजापत्य आग्रयाण द्रुरोर परित्यागी नैष्ठिको ब्रह्मचारिति २ गृहस्था अपिच
तुर्विधा भवंति वार्त्तुक वृत्तयः शालीन वृत्तयो यायावरा घोरसंन्यासिकाश्चेति । तत्र वार्त्तु
क वृत्तयः कृषिगोरक्ष्य वाणिज्य मगर्हित्त मुपयुंजानाः शत संवत्सराभिः क्रियाभिर्यजंते
आत्मानं प्रार्थयंते शालीन वृत्तयो यजंतो न्याजयंतो धीयानानाध्यायंतो ददतो न प्रति
गृह्णंतः शतसंवत्सराभिः क्रियाभिर्यजंते आत्मानं प्रार्थयंते यायावरा यजंतो याजयंतो
धीयाना अध्यापयंतो ददतः प्रतिगृह्णंतः शत संवत्सराभिः क्रियाभिर्यजंत आत्मा
नं प्रार्थयंते घोरसंन्यासिका उद्धृत परिपूताभिरद्भिः कार्यं कुर्वंतः प्रतिदिवसमाहृत्यो
ञ्छवृत्तिमुपयुंजानाः शतसंवत्सराभिः क्रियाभिर्यजंते आत्मानं प्रार्थयंते २ वानप्रस्था
अपिच तुर्विधा भवंति वैखानसा उदुंबरा बालखिल्याः फेनपाश्चेति तत्र वैखानसा अकृ

१५१

151

सूपच्योषधिवनस्पतिभिर्ग्रामबहिष्कृताभिरग्निपरिचरणांकृत्वा पंचमहायज्ञक्रियां नि
वर्त्तयंत आत्मानं प्रार्थयंते औदुंबराः प्रातरुत्थाय यां दिशमभिप्रेक्षंते तत्राहृतौदुंबरबद
रनीवारश्यामाकैरग्निपरिचरणांकृत्वा पंचमहायज्ञक्रियां निवर्त्तयंते आत्मानं प्रार्थयंते वा
लखिल्या जटाधराश्चीरचर्मवल्कलपरिवृताः कार्त्तिक्यां पौर्णमास्यां पुष्पफलमुत्सृजंतः
शेषान् अष्टौ मासान् वृत्त्युपार्जनं कृत्वाग्निपरिचरणांकृत्वा पंचमहायज्ञक्रियां निवर्त्तय
त आत्मानं प्रार्थयंते फेनपा उन्मादकाः शीर्णपर्णफलभोजिनो यत्र तत्र वसंतोग्निपरि
चरणांकृत्वा पंचमहायज्ञक्रियां निवर्त्तयंत आत्मानं प्रार्थयंते ३ परिव्राजका अपि
चतुर्विधा भवंति कुटीचरा बहूदका हंसाः परमहंसाश्चेति तत्र कुटीचराः स्वपुत्र
गृहेषु भिक्षाचर्यं चरंत आत्मानं प्रार्थयंते बहूदकाः त्रिदंडकमंडलुशिक्यपट्ट

१५१

जलपवित्रपादुकासन शिखायज्ञोपवीतकौपीनकाषायवेश धारिणः साधुवृत्तेषु
ब्राह्मणकुलेषु भैक्षाचर्य्यं चरंत आत्मानं प्रार्थयंते हंसा एकदंडधारिणः शिखावर्जि
ता यज्ञोपवीतधारिणः शिक्यकमंडलुहस्ता ग्रामैकरात्रवासिनो नगरे तीर्थेषु पंचरात्रं व
संत एकरात्रद्विरात्रकृच्छ्रचांद्रायणादि चरंत आत्मानं प्रार्थयंते॥ परमहंसा नदंडधारि
मुंडाः कंथाकौपीनवाससोव्यक्तलिंगा अव्यक्ताचारा अनुन्मत्ता उन्मत्तवदाचरंतस्त्रि
दंडकमंडलुशिक्यपात्र जलपवित्रपादुकासन शिखायज्ञोपवीतानां त्यागिनः शून्या
गारदेवगृहवासिनो न तेषां धर्मो नाधर्मो न चानृतं सर्वसहाः सर्वसमाः समलोष्टा
श्मकांचनाः यथोपपन्नचातुर्वर्ण्यभैक्षाचर्यं चरंत आत्मानं मोक्षयंत आत्मानं मो
क्षयंत इति चतुर्थः खंडः॥४॥ इत्यथर्ववेदे आश्रमोपनिषत्समाप्ता द्विपंचाशत् ५२

द्विपंचाशत्संख्योपनिषद्ग्रंथः समाप्तः ॥५२॥ पंचदशोपनिषदो भवंति शौनकीयानां

१५२ मुंडकादित्रिवल्ल्यंतास्ता विज्ञेया ब्रह्मवेदस्य सप्तत्रिंशत्तथान्यास्तु पैप्पलादिप्रभेदतः ॥

एवं पंचाशद्द्व्यधिका ब्रह्मवेदस्य नान्यतः नीलरुद्रप्रभृतय आम्नाताः प्रकीर्त्तिताः ॥ एताः सर्वाः पृथग्वाक्याजीवब्रह्मैक्यबोधिकाः ॥ इत्यथर्ववेदोपनिषद्ग्रंथः समाप्तः ॥५२॥

अथर्ववेदे द्विपंचाशत् उपनिषदः ५२

अथर्वणवेदोपनिषद्

१५२